Contributors:

कविहृदयम्–



# विषयसंवेदनम्

**यस्य नास्ति स्वयंप्रज्ञा**
**केवलं यो बहुश्रुतः।**
**न स जानाति शास्त्रार्थान्**
**दर्वी पाकरसान् इव।।**

**– महाभारतम्**

यः बहुश्रुतः सः पण्डितः इति उच्यते। पण्डितस्य लोके गौरवं सहजम्। किन्तु महाभारतं वदति यत् केवलं बहुश्रुतत्वं न प्रशस्तम् इति।

बहुश्रुतत्वं नाम जीवनभवनस्य देहली इव। स्वकीये प्रकोष्ठे यत् सुखं या तृप्तिः च प्राप्यते तत् देहल्यां स्थित्या न प्राप्यते। तर्हि स्वयंप्रज्ञा नाम का? 'प्रज्ञा नाम अवगतेः संवेदनारूपम्' इति उक्तम् अस्ति केनचित् चिन्तकेन। कुत्रचित् भूकम्पकारणतः पञ्चशतं जनाः मृताः इति पत्रिकावार्ता पठ्यते अस्माभिः। एतत् अवगतिमात्रम्। वार्त्राश्रवणस्य अनन्तरम् अस्माकं हृदये तीव्रः अनुकम्पः उत्पन्नः चेत्, नेत्राभ्याम् अश्रुबिन्दवः निर्गताः चेत् तत् अवगतेः संवेदनारूपम्। 'अवगतिः' शाखाग्रे स्थितं पुष्पम्। 'प्रज्ञा' च हृदयसम्बद्धं मूलम्। शिशुः यदा रोदिति तदा विमाता असुखस्य अवगतिं प्राप्नोति। माता तु असुखस्य संवेदनां प्राप्य प्रतिक्रियां प्रदर्शयति। एवं विषयावगतेः विषयसंवेदनारूपायाः प्रज्ञायाः च महदन्तरम्।

यः केवलं बहुश्रुतः भवति सः अवगतेः (ज्ञानस्य) भारं वहति, तावदेव। यथा पाके स्थिता दर्वी पाकरसं न जानाति तथैव बहुश्रुतस्य अपि स्थितिः। शुष्कपाण्डित्यं तस्य। किम् एतादृशेन पाण्डित्येन?

यः प्रज्ञावान् सः सामाजिकविषयेषु स्पन्दते। अन्येषां कष्टं दृष्ट्वा खेदं प्राप्य तस्य निवारणार्थं यथाशक्ति प्रयतते अपि। एतावदेव न, सर्वत्र स्नेहादिकं प्रकटयन्, सन्तोषं च अनुभवन् इतरान् अपि तोषयति, स्वस्नेहेन तर्पयति च। एतादृशाः जनाः जीवनरूपे रसपात्रे दर्वीमात्राणि न, अपि तु आस्वादसमर्थाः रसनाः। (जिह्वाः) एतादृशानां सङ्ख्या लोके वर्धेत।

('मनसा सह संवादः' इत्येतस्मात् कन्नडपुस्तकात्)

# उत्तिष्ठतु, चायं पीत्वा आगच्छाम

| | |
|---|---|
| प्रदीपः – उत्तिष्ठतु रे सुरेश! चायं पीत्वा आगच्छाम। | Come on Suresh, get up, let us go for a cup of tea. |
| सुरेशः – कुत्र स्मः वयम्? | Where are we now? |
| प्र – भूलोके। अलं स्वप्नलोके विहारेण। उत्तिष्ठतु तावत्। | We are on planet earth. Enough of wandering in dreamland; come on. |
| सु – कः समयः इदानीम्? | What is the time now? |
| प्र – अपराह्णस्य त्रिवादनम्। किं भवान् एवम् एव प्रश्नान् पृच्छन् उपविशति, उत उत्थाय अधः आगच्छति? | It is 3 in the afternoon. Do you wish to while away time asking questions, or will you come down? |
| सु – अहं न आगच्छामि। भवान् गत्वा किमपि पीत्वा आगच्छतु। | No. I won't. You can go and have it. |
| प्र – भवान् अपि आगच्छतु रे। | Come on, I say. |
| सु – पानीयसेवने इच्छा नास्ति मम। | I won't take anything. I am not interested. |
| प्र – शीतलं पानीयं किमपि पिबतु। | Take some cool drink at least. |
| सु – तदपि मास्तु मम। | Even that I don't need. |
| प्र – कदलीफलं वा खादाम, आगच्छतु। | Come on, let us have some plantains instead. |
| सु – सद्यः एव भुक्तं खलु? अतः खादने पाने वा इच्छा नास्ति मम। | We have had food just now, isn't it? That is why I say I don't need anything. |
| प्र – अस्तु महाशय! उत्तिष्ठतु प्रथमम्। यानात् अवतीर्य किञ्चित् लघुं सञ्चारं कृत्वा वा आगच्छाम। | OK sir, at least get down from the bus. Let us take a walk. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अचरत् - | Grazed | निर्भीका - | Fearless |
| अनर्हम् - | Undeserving | पणः - | Bet |
| अनुदानम् - | Financial help | पराकाष्ठा - | Extreme end |
| अभिलाषः - | Desire | पारावतः - | Pigeon |
| अमितम् - | Unlimited | पुरातनकूपः - | Old well |
| अलसः - | Lazy | पुष्पगुच्छम् - | Bunch of flowers |
| इष्टिका - | Brick | पूयः - | Pus |
| कपालः - | Skull | फलकम् - | Board |
| कर्णाकर्णिका - | Hearsay | बधिरः - | Deaf |
| कुद्दालः - | Spade | भागिनेयी - | Sister's daughter |
| खनित्रम् - | Crowbar | मकरः - | Crocodile |
| खल्वाटः - | Bald-headed | महापिटकः - | Large swelling |
| गलन्तिका - | Jar | मृत्पात्रम् - | Mud pot |
| चक्रवृद्धिः - | Compound interest | वमनम् - | Vomit |
| चङ्क्रमणम् - | To crawl (on hands and knees) | विकर्षणम् - | Repulsion |
| चिता - | Was selected | विकलाङ्गः - | Handicapped |
| चीत्कृत्य - | Having wailed | वेत्रदण्डः - | Cane |
| चुम्बकम् - | Magnet | सुहृत् - | Friend |
| चोदयति - | Induces | सौहार्दयुतः - | Cordial |
| निगीर्णवान् - | Swallowed | स्थालिका - | Plate |



# चन्दमामा

जून्-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००.

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'




## यदा मातापितरः अपि सुहृदः भवन्ति तदा

'क्रीडारहितं कार्यमयं जीवनं बालकं मूर्खं करोति' इति वदन्ति प्राज्ञाः। यदा यदा परीक्षा आसन्ना भवति तदा तदा मातापितरौ अपेक्षेते यत् मम पुत्रः क्रीडां सर्वथा विहाय केवलं पठनं करोतु इति। अतः 'पितरौ एव पुत्रं मूर्खं कुरुतः' इति यदि वयं वदामः तर्हि न तत्र अतिशयोक्तिः! यदि बालः प्रतिदिनं किञ्चित्कालं क्रीडेत् तर्हि किं महती हानिः भवेत्? न खलु?

एषः इदानीं गतः विषयः। परीक्षां समाप्य बालाः विरामं प्राप्य मित्रैः सह जल्पन्तः, दूरस्थान् ग्रामान् नगरप्रदेशान् वा गत्वा बान्धवैः मिलन्तः, कथापुस्तकादिकं पठन्तः, विविधैः साधनैः क्रीडन्तः वा समयं यापयन्तः स्युः।

क्रीडा बाल्यावस्थायाः अतिप्रधानम् अङ्गम्। अल्पवयस्काः बालाः क्रीडनकैः क्रीडन्ति चेत् पोगण्डबालाः किशोराः च प्राङ्गणेषु गृहेषु वा क्रीडन्तः भवन्ति। क्रीडाद्वारा एव बालाः मित्राणि सम्पादयितुं शक्नुवन्ति, तद्द्वारा एव ते प्राप्तां मैत्रीं द्रढयितुम् अपि शक्नुवन्ति।

किन्तु एषु दिनेषु ते महोन्नतभवनस्थेषु लघुप्रकोष्ठेषु वसन्तः कालं यापयन्ति। यत्र वासार्थम् एव स्थलम् अपर्याप्तं तत्र क्रीडार्थं कथं वा अवकाशः? न तत्र सुहृदः प्राप्यन्ते। प्रायः मातापितरौ एव तस्य बालस्य सुहृदौ भवतः। एतादृशे सन्दर्भे बालेन सह क्रीडितुम् अपि किञ्चित् समयः दातव्यः भवति मातापितृभ्याम्। कति मातापितरः एतादृशेषु विषयेषु चिन्तनं कृतवन्तः स्युः? यदि मातापितरः दिने एकघण्टां यावत् वा बालैः सह वसन्तः तेषां क्रीडादिषु भागं वहेयुः तर्हि बालानां हृदयं बुद्धिः च विकासं प्राप्नुयात्, बालेषु च मानवीयमौल्यानि विकसितानि भवेयुः। यदा अन्यः कोऽपि सुहृत् बालस्य न भवति तदा मातापितरौ एव यदि तस्य सुहृदौ भवतः तर्हि न तत्र कोऽपि दोषः। क्रीडासन्दर्भे सर्वेऽपि सुहृदः एव।

यदि बालाः मातापितरः च एतद्विषये चिन्तनं कुर्युः तर्हि वरं स्यात् खलु?

सम्पुटः–१० जून्–१९९३ सञ्चिका–३

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नामनिर्वचनम्-६

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**मुकुन्दः–** मुकुं मोक्षं ददाति इति मुकुन्दः।[(डु) दाञ् (दाने)+कः] यः मोक्षम् इहलोकबन्धनात् मुक्तिं यः ददाति सः मुकुन्दः। श्रीमन्नारायणे एषः शब्दः लोके रूढः। निरुक्तिः एवं सूचयति– "तैः प्रार्थितः स्वयं मुक्तिं मुकुन्दः स्वाद्ददाति सः" इति।

मुक्तिदः (मुक्तिं ददाति इति) इति शब्दात् मुकुन्दशब्दः निष्पन्नः इति भासते। विष्णुसहस्रनामस्तोत्रव्याख्याने एवं लिखितम्– "अक्षरसाम्यात् निरुक्तिवचनात् नैरुक्तानां मुकुन्द इति निरुक्तिः" इति।

मुकुन्दशब्दस्य रत्नविशेषः, (नवनिधिषु अन्यतमः) पारदम् इत्यादयः अन्ये अर्थाः अपि सन्ति एव। तथा च हेमकोषः– "मुकुन्दः पारदे रत्नविशेषे गरुडध्वजे" इति।

**मधुमती–** मधु मधुरसः अस्याः अस्ति इति मतुप्+ङीप्। या मधुयुक्ता सा मधुमती इति उच्यते। मधुशब्दस्य पुष्परसः, मधुररसः, क्षीरं, मधुमक्षिकानिर्मितं द्रव्यम् चैत्रमासः इत्यादयः बहवः अर्थाः सन्ति। [व्युत्पत्तिः– मन्यते– मन(ज्ञाने) डः – नस्य धः] मधुशब्दस्य अर्थान् विश्वकोषः एवं विवृणोति– "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे" इति।

मधुमती इति काचित् नदी प्रसिद्धा अस्ति, या च मालवदेशे जाता सिन्धुनदेन मिलति। मालतीमाधवे(नवमेऽङ्के) शङ्करस्य वर्णनसमये एवं विशेषणं योजितम्– 'मधुमती-सिन्धुसम्भेदपावनः' इति।

---

*सूचना– भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

# केनडादेशे विवादः



आंग्लेयाः फ्रेञ्च्जनाः च अन्यत्र कुत्रचित् मैत्र्या व्यवहरेयुः नाम, किन्तु केनडादेशे ते परस्परविरोधिनः एव सन्ति। द्विशतवर्षेभ्यः एषः कलहः प्रचलन् अस्ति। एतस्य विवादस्य निवारणार्थम्, एकताप्रतिष्ठापनार्थं च 'जनमतसङ्ग्रहणं'(रेफरेण्डम्) प्रवृत्तम्। केनडादेशस्य अङ्गभूतेषु दशसु राज्येषु सप्त राज्यानि प्रतिकूलप्रतिक्रियां, त्रीणि राज्यानि च अनुकूलप्रतिक्रियां प्रादर्शयन्।

इतः ५०० वर्षेभ्यः पूर्वं – तन्नाम १४९७तमे वर्षे – आंग्लनाविकः जान् काबोट् एतस्य अन्वेषणं कृतवान्। तेषु दिनेषु सः न्यूकौण्डल्याण्ड् नोवास्काशिया च गतवान् आसीत्। ततः आरभ्य तयोः प्रदेशेषु आंग्लशासनम् आरब्धम्। ततः ४० वर्षाणाम् अनन्तरं जाकेस् कार्टियान्नामकः फ्रेञ्च्-अन्वेषकः क्युबेक्प्रदेशस्य दक्षिणभागे स्थितम् एकं ग्रामं प्राप्तवान्। सः श्रुतवान् यत् तत्रत्याः रेड् इण्डियन् जनाः तं प्रदेशं 'कनाथा'नाम्ना आह्वयन्ति स्म इति। एषः शब्दः ह्यूरन्भाषायाः। ततः एव 'केनडा' इति शब्दः निष्पन्नः। फ्रान्स्सर्वकारः तं प्रदेशं 'न्यू फ्रान्स्' नाम्ना निर्दिशन् तत्र स्वकीयम् अधिकारम् उपास्थापयत्।

१७ शतके इंग्लेण्ड्-फ्रान्स्देशयोः प्रत्यक्षयुद्धम् आरब्धम्। १७१३ तमे प्रवृत्तस्य 'युट्रेक्ट्सन्धेः' अनुगुणम् इंग्लेण्ड्देशः कांश्चन प्रदेशान् स्वाधीनान् अकरोत्। ततः सप्तवर्षाणां युद्धस्य अनन्तरं १७६९ तमे वर्षे 'प्यारिस्सन्धेः' परिणामतः केनडा ब्रिटन्देशस्य अधीनः जातः।

ततः शतवर्षाभ्यन्तरे क्यूबेक्, अण्टारियो, नोवास्काशिया, न्यू ब्रन्सविक् इत्येतानि राज्यानि अत्र सम्मिलितानि। ततः केषाञ्चित् वर्षाणाम् अनन्तरं मनीटोबा, ब्रिटिश्कोलम्बिया, अल्बेर्टा, सस्काच्युवान् इत्येतानि राज्यानि अपि सम्मिलितानि जातानि।

१९३१ तमे वर्षे 'वेस्ट् मिनिस्टर्पद्धतेः' अनुगुणम् एषः सुविशालः देशः ब्रिटिश्कामन्वेल्थ् अधीनः सन् स्वतन्त्रभूभागरूपेण रूपितः अभवत्। किन्तु क्यूबेक् इत्यादिषु प्रदेशेषु निवसन्तः

फ्रेञ्च्भाषाभाषिणः स्वभाषायाः संस्कृतेः च रक्षणार्थं प्रयत्नं कुर्वन्तः देशविभागं प्रतिपादयन्तः स्थितवन्तः।

गते वर्षद्वये विभाजनवादस्य स्थगनार्थं वेगेन चिन्तनानि, विचारविमर्शाः, चर्चाः च निरन्तरं प्रवृत्ताः। प्रधानमन्त्री ब्रियान् मलरोनीवर्यः, दशानां राज्यानां मुख्यमन्त्रिभिः सह वार्तालापं कुर्वन् संविधाने कानिचन परिवर्तनानि आनेतुं प्रयत्नं कृतवान्।

क्यूबेक्राज्याय विशेषस्थानदानम्, लोकसभास्थानार्थं नामनिर्देशक्रमं परित्यज्य निर्वाचनक्रमस्य स्वीकारः, मूलवासिनां रेड्-इण्डियन्जनानां कृते एस्किमोजनानां कृते च स्वपालनाधिकारस्य दानम्– इत्येतादृशान् अंशान् आधारीकृत्य १९९२ तमे वर्षे अगस्ट्मासे २८ दिनाङ्के कश्चन सन्धिप्रस्तावः उपस्थापितः।

सद्यः जनमतसङ्ग्रहकार्यं यत् प्रवृत्तं तत्र एकः प्रश्नः पृष्टः आसीत्– "अगस्ट्-२८ दिनाङ्के




आगतस्य सन्धेः अनुगुणं संविधानस्य परिवर्तनं किं भवन्तः अङ्गीकुर्वन्ति?" इति।

क्यूबेक्राज्येन अनङ्गीकारः प्रदर्शितः। यतः एतस्य सन्धेः अनुगुणं तस्य स्वतन्त्रस्थितिः न भविष्यति। अत्यधिकजनसङ्ख्यया युक्तेन अण्टारियोराज्येन अपि निराकृतिः प्रदर्शिता। नोवास्काशिया, मानिटोबा, सस्काच्युवान्, अल्बोर्टा, ब्रिटिश् कोलम्बिया– इत्येतानि राज्यानि अपि असम्मतिम् एव प्रादर्शयन्। न्यूफौण्ड्ल्याण्ड्, न्यूब्रस्नविक्, प्रिन्स् एड्वर्ड् ऐल्याण्ड्– इत्येतानि त्रीणि राज्यानि अभिप्रायस्य समर्थनम् अकुर्वन्। एवं स्थिते अपि दशानां राज्यानां विधानसभायाः अङ्गीकारः, फेडरल् पार्लिमेण्ट् अङ्गीकारः च अस्ति चेत् संविधानस्य परिवर्तनं कर्तुं शक्यते।

जनमतसङ्ग्रहसन्दर्भे इतरसन्दर्भेषु च प्रजानाम् अप्रियत्वं प्राप्य प्रधानमन्त्री मलरोनी स्वपदत्यागम् इच्छन् त्यागपत्रं समर्पितवान् अस्ति।



# अलसः पिशाचः

पार्वतीपुरे परमेश्वरः नाम कश्चन अलसः आसीत्। बाल्ये एव तदीया माता दिवं गता आसीत्। पिता एव तं महत्या प्रीत्या पोषितवान् आसीत्। परमेश्वरः इदानीं पञ्चविंशतिवर्षीयः। तस्य आलस्यं तावत् आसीत् यत् सः एकं तृणम् अपि इतस्ततः चालयितुं न इच्छति स्म।

परमेश्वरस्य स्वभावं सर्वे जानन्ति स्म। अतः ग्रामीणेषु कोऽपि तं जामातरं कर्तुं न इच्छति स्म। अन्ते दूरग्रामस्य कन्यां नागमणिं परिणीतवान् परमेश्वरः। नागमणिः यदा पतिगृहम् आगता तदा एव ज्ञातवती यत् मम पतिः अलसशिखामणिः इति।

एकः मासः अतीतः। पत्युः आलस्यपूर्णं व्यवहारं द्रष्टुम् अशक्नुवती नागमणिः कदाचित् पतिम् उक्तवती– "आर्य! आदिनं भवान् एवं विना कार्यम् आलस्येन उपविशति चेत् जीवनयात्रा कथं प्रचलेत? भवतः पिता षष्टिवर्षीयः। तथापि सः प्रतिदिनं कृषिक्षेत्रे कार्यं करोति। यदि भवता तस्य कार्ये साहाय्यं क्रियेत तर्हि वरं खलु?" इति।

एतत् श्रुत्वा परमेश्वरः नितरां क्रुद्धः। सः कोपेन एव पत्नीम् उक्तवान्– "किं रे, इदमिदानीम् एतत् गृहम् आगता भवती माम् उपदिशति वा? कियत् धाष्ट्र्यं भवत्याः? अद्य भवती वदति– पितुः साहाय्यं करोतु इति। श्वः भवती वदेत्– पाके मम साहाय्यं करोतु इति। एतत्सर्वं सर्वथा न शक्यते मया" इति।

एवम् एव वर्षद्वयम् अतीतम्। परमेश्वरस्य पिता दिवं गतः आसीत्। परमेश्वरस्य एकः पुत्रः जातः आसीत्। तथापि परमेश्वरे तु किमपि परिवर्तनं न जातम् आसीत्। नागमणिः शिशोः योगक्षेमं कथमपि स्वयं निर्वहन्ती गृहकार्याणि कृत्वा कृषिकार्यार्थम् अपि गच्छति स्म।

आतपयुक्तं किञ्चन दिनम्। नागमणिः

"सुभद्रा"

दशमासीयं स्वपुत्रं परमेश्वरस्य अधीनं कृत्वा कार्यार्थं क्षेत्रं गतवती। सायं यदा सा प्रत्यागतवती तदा दृष्टवती यत् पुत्रः चङ्क्रमणं कुर्वन् आवरणरहितस्य पुरातनकूपस्य समीपं गतः अस्ति इति। ततः अनतिदूरे एव उपविष्टः परमेश्वरः एतत् पश्यन् अपि मौनम् आसीत्।

नागमणिः दूरात् एव दृष्ट्वा भीत्या सकृत् चीत्कृत्य हस्तस्थं कृषिसाधनं तत्रैव क्षिप्त्वा झटिति अग्रे गत्वा पुत्रम् उन्नीतवती। निमेषद्वयाभ्यन्तरे यदा भीतिः अपगता तदा सा पतिं क्रोधेन पश्यन्ती उक्तवती– "यदि मम आगमने क्षणात्मकः विलम्बः जातः स्यात् तर्हि आवयोः पुत्रः कूपे अपतिष्यत्। एतत् पश्यन् अपि मौनम् उपविष्टवान् खलु भवान्? कीदृशः पिता भवान्? धिक् भवतः जडताम्" इति।

तदा परमेश्वरः सहजस्वरेण एव उक्तवान्– "दूरात् आगच्छन्ती भवती दृष्टा मया। भवती आगत्य पुत्रम् उन्नयति इति चिन्तयित्वा अहं मौनं स्थितवान्। वृथा मया किमर्थम् उत्थानकष्टम् अनुभोक्तव्यम्?" इति।

"धिक् भवन्तम्! एतादृशम् अलसम् अन्यत्र कुत्रापि न दृष्टवती अहम्। अहं मम पुत्रस्य मरणं कदापि न इच्छामि। इतः परम् एकं क्षणमपि अत्र न तिष्ठामि" इति रुदती उक्त्वा नागमणिः पुत्रम् उन्नीय तत्क्षणे एव मातृगृहं गतवती।

कश्चन कालः अतीतः। मञ्चप्रसारकः



कोऽपि नास्ति इत्यतः परमेश्वरः स्वयं तत् कार्यं कर्तुम् अनिच्छन् स्तम्भम् आलम्ब्य उपविष्टः एव लघुनिद्रां प्राप्तवान्। किञ्चित्कालानन्तरं यदा सः नेत्रे उन्मीलितवान् तदा तस्य पुरतः कश्चन पिशाचः स्थितः आसीत्।

पिशाचदर्शनात् सन्तोषम् अनुभवन् उक्तवान् परमेश्वरः– "भगवता प्रेषितः इव भवान् योग्ये समये आगतः। प्रथमं पदर्थम् एकं मञ्चं प्रसारयतु। ततः आगमनकारणं वदतु" इति।

"अहं कश्चन अलसः पिशाचः। भवतः दर्शनात् एव मया ज्ञातं यत् भवान् अपि अलसः इति। अतः मैत्रीभावेन भवत्समीपम् आगतवान्। मम किञ्चित् साहाय्यम् आवश्यकम्। किं भवान् मम साहाय्यं कर्तुं शक्नुयात्?" इति पृष्टवान् पिशाचः।

"किं तत् साहाय्यं मया करणीयम्?" इति आलस्येन असन्तोषेण च पृष्टवान् परमेश्वरः।

"एकं कुद्दालम्, एकं खनित्रं च गृहीत्वा मया सह आगच्छतु। ततः सर्वं वदिष्यामि" इति अवदत् पिशाचः।

"कुद्दालं खनित्रं च भवान् एव स्वीकृत्य गच्छतु" इति उक्तवान् परमेश्वरः।

"भवतः आयासः यथा न स्यात् तथा अहं मम पूर्वजीवनस्य कथां श्रावयामि। मया यथा उच्यते तथा कृतं चेत् भवता महान् लाभः प्राप्यते। अतः मम वचनानुगुणं करोतु" इति पिशाचः अवदत्। न जानीमः कथम् इति,





परमेश्वरः पिशाचादेशं पालयन् कुद्दालं खनित्रं च गृहीत्वा पिशाचम् अनुसृतवान्।

मार्गे गमनसमये पिशाचः स्वकथाम् अश्रावयत्—

''अहं पूर्वजन्मनि सोमेश्वरः नाम तरुणः आसम्। विना कार्यम् इतस्ततः अटन् समयं यापयामि स्म। मम त्रयः सुहृदः आसन्। तेषु एकः महापापी आसीत्। तेन अकृतं पापकार्यं प्रायः न आसीत्। द्वितीयः सर्वदुर्गुणानाम् आश्रयः आसीत्। तृतीयः सर्वेषां दुर्व्यसनानां दासः आसीत्। अहम् एतैः सह सदा अटामि स्म। तथापि सौभाग्यवशात् एतेषां दुर्गुणाः मयि न आगताः आसन्।

मम एका भगिनी आसीत्। तस्याः विवाहस्य निमित्तं मम पिता पार्श्वग्रामस्थं क्षेत्रं विक्रीय धनस्यूतेन सह रात्रिकाले स्वग्रामम् आगच्छन् आसीत्। एवम् आगमनसमये मम पितुः सन्देहः जातः यत् केचन रहसि माम् अनुसरन्तः सन्ति इति। अतः सः धनं कस्यचित् वृक्षस्य अधः गर्ते स्थापयित्वा ग्रामस्य दिशि अग्रे गतवान्। ग्रामात् अनतिदूरे अनुसरन्तः आगताः ते दुष्टाः मम पितुः उपरि आक्रमणं कृतवन्तः। किन्तु पितुः सकाशात् धनम् अप्राप्य पितरं सम्यक् ताडयित्वा ततः पलायितवन्तः।

एतेन नितरां व्रणितः मम पिता शय्याम् आश्रितवान्। द्वित्रेषु एव दिनेषु मरणं प्राप्तवान् च। मरणात् पूर्वं सः माम् आहूय धनं कुत्र रक्षितम् इति सूचयित्वा— ''तेन धनेन भवतः भगिन्याः विवाहं निर्वर्तयतु'' इति उक्तवान् आसीत्।

अहं तु अलस्यकारणतः धनस्य आनयने विलम्बं कुर्वन् आसम्। भगित्याः विवाहस्य दिनद्वयात् पूर्वम् अहं कुद्दालं स्वीकृत्य पित्रा सूचितस्य वृक्षस्य समीपं प्रस्थितवान्। मम सुहृदः मदीयं गमनं जानन्तः रहसि माम् अनुसृतवन्तः। अहम् एतत् न जानामि स्म।

अचिरात् एव मया ज्ञातं यत् केचन माम् अनुसरन्तः सन्ति इति। अतः अहं यत्र धनम् आसीत् तत्र न गतवान्, अपि तु अन्यस्य वृक्षस्य समीपं गतवान्, खननं कर्तुम् उद्युक्तः च। तदा ते दुष्टाः महतीं शिलाम् उन्नीय मम

उपरि पातितवन्तः। अहं तत्रैव प्राणैः वियुक्तः अभवम्।

एवं स्वकथां निवेद्य अलसः पिशाचः अवदत्– "धनम् आनेतुं गतः अहं मरणं प्राप्तवान् खलु? अतः मम भगिन्याः विवाहः स्थगितः। मम मरणस्य श्रवणात्, विवाहस्थगनाच्च भगिनी माता चापि प्राणैः वियुक्ते अभवताम्। अहं च पिशाचरूपं प्राप्य एवम् अटन् अस्मि" इति।

एतावता ताभ्यां वृक्षसमीपम् आगतम् आसीत्। पिशाचेन सूचिते स्थले खननं कृतवान् परमेश्वरः। तत्र कानिचन नाणकानि प्राप्तानि। तदा पिशाचः– "अद्य सायं पुत्रेण सह गच्छन्ती भवतः पत्नी मया दृष्टा। भवतः पुत्रः यदा रोदनं कृतवान् तदा भवतः पत्नी तस्य सान्त्वनं कुर्वती उक्तवती– 'वत्स! भवान् अलसस्य पुत्रः सन् जन्म प्राप्तवान् यत् तस्य परिणामतः भवता एतत् कष्टम् अनुभोक्तव्यम् एव। किं करोमि वत्स! असहाया अस्मि' इति। एवम् उक्त्वा सा रुदती अश्रूणि स्रावितवती। एतत् श्रुतवतः ममापि नेत्राभ्याम् अश्रूणि आगतानि। भवान् एतत् धनम् उपयुज्य किमपि वाणिज्यं करोतु। पत्नीपुत्रान् आतृप्ति भोजयतु। आलस्यं परित्यजतु। आलस्यकारणतः मया या दुर्गतिः प्राप्ता तत् प्रत्यक्षं दृष्टं खलु भवता?" इति उक्त्वा ततः अदृश्यः अभवत्।

परमेश्वरः तानि नाणकानि परीक्षितवान्। तानि इदानीं व्यवहारे न आसन्। अतः तानि उपयोक्तुम् अनर्हाणि आसन्। ततः गृहं गतः परमेश्वरः परिश्रमेण कार्यं कर्तुम् उद्युक्तः अभवत्। पत्नीं प्रति वार्ता प्रेषितवान् यत् अहं कृषिकार्यं कुर्वन् अस्मि, भवती पुत्रेण सह गृहम् आगच्छतु इति।

पत्युः पत्रं प्राप्य नागमणिः नितरां सन्तुष्टा। सा महता सन्तोषेण पतिगृहं गन्तुं सन्नाहं कर्तुम् उद्युक्ता।

तत्समये एव भगवता प्रेषिताः एव त्रयः सिंहाः तत्र आगताः। तान् त्रीन् अपि दुष्टान् मारयित्वा खादित्वा ततः निर्गतवन्तः।



# भिक्षुकस्य बुद्धिहीनता

महिमपुर्याः कस्यचित् मन्दिरस्य पुरतः कश्चन भिक्षुकः उपविश्य भिक्षायाचनं कुर्वन् आसीत्। तस्य पुरतः एकं फलकम् आसीत्। फलके लिखितम् आसीत्– 'अन्धोऽस्मि। भिक्षां यच्छन्तु' इति। ये मन्दिरम् आगच्छन्ति ते भिक्षुकस्य पुरतः प्रसारिते वस्त्रे नाणकानि पातयित्वा गच्छन्ति स्म।

कश्चन भक्तः किञ्चिद्दूरतः एकं नाणकं क्षिप्तवान्। तच्च वस्त्रात् बहिः किञ्चिद्दूरे अपतत्। तदा भिक्षुकः झटिति उत्थाय नाणकं स्वीकृत्य स्ववस्त्रस्य उपरि स्थापितवान्।

एतत् दृष्ट्वा सः भक्तः ज्ञातवान् यत् एषः भिक्षुकः न अन्धः इति। अतः सः भिक्षुकसमीपं गत्वा उक्तवान्– "किं रे, सर्वं द्रष्टुं सामर्थ्यम् अस्ति एव भवतः। तथापि अन्धः इति लिखितं फलकं स्वस्य पुरतः स्थापितवान् अस्ति भवान्। जनान् एवं वञ्चयतः भवतः लज्जा न भवति?" इति।

तदा सः भिक्षुकः झटिति उक्तवान्– "फलके वस्तुतः 'मूकः' इति लेखनीयम् आसीत्। किन्तु फलकलेखकः प्रमादवशात् 'अन्धः' इति लिखितवान्" इति।

"हुं। भवता उत्तरम् एव निरूपयति यत् भवान् मूकः अपि न इति। मद्वचनसमनन्तरम् एव उत्तरम् उक्तम् इत्यतः बधिरः अपि न भवान्। भोः, वञ्चनार्थम् अपि बुद्धिमत्ता आवश्यकी भवति। अस्तु, प्रचलतु नाम। उदरनिमित्तं बहुकृतवेषः भवान" इति उक्त्वा ततः गतवान् सः भक्तः।





# विचित्रं पुष्पम्

भारतस्य ईशान्यदिशि माणिक्यपुरी नाम राज्यम् आसीत्। तत्र प्रतिवर्षं वसन्तऋतोः स्वागतार्थम् एकं मासं यावत् वसन्तोत्सवः आचर्यते स्म। वसन्तऋतोः आरम्भे एव पर्वतैः अरण्यैः च आवृतं माणिक्यपुरीराज्यं महत्या शोभया विराजते स्म। नगरं समग्रं बहुसमीचीनतया अलङ्क्रियते स्म। विविधैः तोरणैः, रङ्गवल्लीभिः, मालाभिः च नगरस्य अलङ्कारः क्रियते स्म। वसन्तोत्सवस्य वर्णनं कर्तुं प्रायः बृहस्पतिः अपि अशक्तः यथा भवेत् तथा अलङ्कारः क्रियते स्म जनैः।

माणिक्यपुरीं प्रतापवर्मा नाम राजा पालयति स्म। सः उत्तमः राजा इति ख्यातिं प्राप्तवान् आसीत्। पितुः पुष्पवर्मणः आदेशं पालयन् प्रतापवर्मा सिंहासनम् आरुह्य शासनकार्यं निरूढवान् आसीत्। तदीयेन शासनेन सर्वे नागरिकाः राजा पुष्पवर्मा चापि सन्तुष्टाः आसन्।

प्रतापवर्मणः शासनकाले समग्रे देशे शान्तिः स्थिता आसीत्। प्रतिवेशिराज्यानां सम्बन्धः सौहार्दयुतः आसीत्। अतः माणिक्यपुर्याः प्रजाः युद्धभीतिं विना सुखेन जीवन्ति स्म।

देशे शान्तिः समृद्धिः सुखं च आसीत् इत्यतः जनाः मनोरञ्जककार्यक्रमेषु उत्साहं प्रदर्शयन्ति स्म। तत्रापि प्रतिवर्षं



प्रचलिष्यमाणे वसन्तोत्सवे स्त्रियः पुरुषाः बालाः सर्वविधजनाः चापि अमितोत्साहं प्रदर्शयन्ति स्म।

वसन्तोत्सवं जनाः राज्योत्सवं भावयन्ति स्म। न केवलं प्रतिगृहम्, ग्रामे ग्रामे नगरे नगरे एषः उत्सवः आचर्यते स्म। उत्सवाचरणसन्दर्भे धनिक-निर्धनभेदः, वयोभेदः, जातिभेदः इत्यादयः जनैः विस्मियन्ते स्म। एवम् एषः उत्सवः यथा मनोरञ्जकः आसीत् तथैव देशस्य एकतायाः वर्धकः अपि आसीत्।

प्रतापवर्मणः सिंहासनस्य आरोहणस्य पञ्चविंशतितमं वर्षं प्रचलत् आसीत्। अतः एतस्य वर्षस्य वसन्तोत्सवः द्विगुणितेन उत्साहेन आचरणीयः इति जनानां सङ्कल्पः आसीत्। विविधक्रीडानां साहित्यसङ्गीतादीनां कलानां च निमित्तं राज्ञा बह्व्यः स्पर्धाः आयोजिताः आसन्। कविपण्डितादीनां निमित्तं पण्डितसभा अपि आयोजिता आसीत्। एतासु स्पर्धासु पण्डितसभायां च भागः ग्रहीतव्यः इति निमन्त्रणं प्रेषितम् आसीत् समीपराज्येषु निवसतः क्रीडापटून्, कलाकारान्, कवीन्, पण्डितान् च उद्दिश्य।

माणिक्यपुरीतः आमन्त्रणं प्राप्तं चेत् सर्वे क्रीडापटवः, कलाकाराः, कवयः, पण्डिताः च महान्तम् आनन्दं प्राप्तुवन्ति स्म। एतस्य वर्षस्य वार्षिकोत्सवः महता वैभवेन आचर्यते इति तैः श्रुतम् आसीत्। अतः आमन्त्रणं प्राप्य आत्मानं धन्यं मन्यमानाः ते माणिक्यपुरीं प्रति आगतवन्तः आसन्। सर्वेषां वसत्यर्थं राज्ञा योग्या वसतिः कृता आसीत्।

प्रथमं क्रीडास्पर्धाः प्रवृत्ताः। तासु बह्वीषु स्पर्धासु अटविककुलोत्पन्नः कश्चन तरुणः जयं प्राप्य जनानाम् आकर्षणकेन्द्रं जातः आसीत्। मल्लस्पर्धायाम् अपि तेन जयः प्राप्तः। ततः वेत्रदण्डेन क्रीड्यमानायां वेत्रदाण्डिकक्रीडायाम् अपि तेन जयः प्राप्तः। तत्र क्रीडाङ्गणे मध्यभागे किञ्चन शुष्कनारिकेलं स्थाप्यते स्म। अश्वम् आरुह्य आगच्छता क्रीडापटुना दृढेन वेत्रदण्डेन बलात् प्रहृत्य लक्ष्यस्थानं प्रापणीयम् आसीत्। सः अटविकः तरुणः



एकेन एव प्रयत्नेन शुष्कनारिकेलं लक्ष्यस्थानं प्रापितवान् आसीत्। तदीयम् एतत् कौशलं दृष्ट्वा सर्वे हर्षातिरेकेण जयकारं कृतवन्तः आसन्।

स्पर्धानां समाप्तेः अनन्तरं पारितोषिक-वितरणकार्यक्रमः। राजा स्वहस्तेन एव सर्वेभ्यः पारितोषिकं दत्तवान्। अधिकानि पारितोषिकाणि प्राप्तवन्तम् अटविकं तरुणं पश्यन् सः पृष्टवान्– "मित्र! किं नाम भवतः?" इति।

"प्रभो, मम नाम उत्तुङ्गः इति" इति विनयेन उक्तवान् सः तरुणः।

अनन्तरं सः स्वस्य सहचरान् प्रदर्शयन् उक्तवान्– "प्रभो, वयं सर्वे शृङ्गमयपर्वते निवसामः। ऐदम्प्राथम्येन वयं वसन्तोत्सवनिमित्तिकाम् स्पर्धाम् आगम् ऊढवन्तः" इति।

एतत् श्रुतवतः राज्ञः मुखे मन्दहासः आगतः। उत्तुङ्गः मित्रैः सह गत्वा सोपानानि आरुह्य युवराज्ञ्याः प्रियंवदायाः समीपं गत्वा तां नमस्कृत्य पुष्पगुच्छं समर्प्य उक्तवान्– "युवराज्ञि! भवती पुष्पप्रिया इति श्रुतं मया। अस्मत्प्रदेशे जातानि अपूर्वाणि पुष्पाणि एतानि। कृपया स्वीकरोतु एतानि" इति। अनन्तरं वेदिकातः अधः आगतवान् सः।

युवराज्ञी तं पुष्पगुच्छं प्रीत्या पश्यन्ती चिन्तितवती– 'अहो पुष्पाणां सौन्दर्यम्! सौन्दर्येण सह एव सुगन्धः अपि अस्ति। सौन्दर्य-सौगन्ध्ययोः सङ्गमः क्षीरे शर्करायोगः इव अस्ति। कान्त्या प्रकाशमानानाम् एतेषां पुष्पाणां दर्शनतः म्लानम् अपि मनः प्रफुल्लितं भवति। सर्वाणि दुःखानि विस्मृतानि भवन्ति। अस्माकम् उद्याने अपूर्वाणि बहूनि पुष्पसस्यानि सन्ति। किन्तु एतादृशानि पुष्पाणि तु न सन्ति एव। अतः केनापि उपायेन एतानि प्राप्तव्यानि' इति। अतः सा पितरम् उक्तवती– "एतादृशानि अपूर्वाणि पुष्पाणि इतः पूर्वं न दृष्टानि मया। एतेषां पुष्पाणां सस्यम् अस्माकम् उद्याने नास्ति" इति।

राजा एतत् श्रुत्वा अङ्गीकारपूर्वकं शिरः चालितवान्। पारितोषिकवितरणसमारम्भ

समाप्तः। राजा तत्र सम्मिलितान् जनान् उद्दिश्य उक्तवान्– "प्रियप्रजाः! मित्राणि! एतस्मिन् वर्षे महता उत्साहेन वसन्तोत्सवः आचरितः। तत्रापि क्रीडास्पर्धासु महान् उत्साहः दृष्टः। एतासु स्पर्धासु पर्वतीयाः युवकाः भागं गृहीतवन्तः यत् तत् महते सन्तोषाय। शृङ्गमयपर्वतात् एते समागताः इत्यतः तस्य पर्वतस्य स्मरणार्थम् इतः परं वेत्रदाण्डिकक्रीडा 'मयक्रीडा'नाम्ना निर्दिश्यते। एवम् एव इतः परम् अस्माकं सैन्ये पर्वतकुलीयाः तरुणाः अपि नियोज्यन्ते। अद्य वसन्तोत्सवस्य अन्तिमं दिनम्। अतः प्रतिवर्षम् इव श्वः राजभवनस्य द्वाराणि उद्घाटितानि भवन्ति। सर्वे निर्बाधं राजभवनं प्रवेष्टुं तत्र सुखेन कालं यापयितुं च अर्हन्ति। अस्माकं कुलदेवता जगन्माता सर्वान् रक्षतु" इति।

राज्ञः भाषणस्य अनन्तरं सर्वे सन्तोषातिरेकेण जयकारं कृतवन्तः– "राजा प्रतापवर्मा जयतात्। युवराज्ञी प्रियंवदा जयतात्" इति।

राजा युवराज्ञी च रथम् आरुह्य राजभवनं गतवन्तौ। राज्ञः रथे सेनाधिपतिः गम्भीरसिंहः उपविष्टः आसीत्। युवराज्ञ्याः रथे तस्याः सख्यः उपविष्टाः आसन्। महाराजस्य युवराज्ञ्याः च रथौ राजधान्याः मुख्यमार्गे यदा गच्छन्तौ आस्तां तदा मार्गम् उभयतः स्थित्वा जनाः नमस्कारपूर्वकं



शुभाशंसनं कृतवन्तः।

राजभवनं गतवती युवराज्ञी पुष्पगुच्छं स्थापयितुम् एकं पुष्पपात्रम् आनायितवती। तस्मिन् पुष्पगुच्छं स्थापयित्वा तत् पात्रं यथोचिते स्थले स्थापितवती च। उत्तुङ्गनः प्राप्तस्य तस्य पुष्पगुच्छस्य स्थापनात् प्रकोष्ठस्य सौन्दर्यं दशगुणितं प्रवृद्धम्। अतः युवराज्ञी नितरां सन्तुष्टा अभवत्।

अनन्तरदिने राजधान्याः सर्वेभ्यः कोणेभ्यः जनाः राजभवनस्य दिशि आगताः। राजा, युवराज्ञी, अन्ये परिवारसदस्याः च चन्द्रशालायां तिष्ठन्तः जनानां शुभाशंसनं हस्तचालनपूर्वकं स्वीकृतवन्तः।

युवकयुवतयः वर्णमयजलं वर्णचूर्णं च



परस्परस्य उपरि अर्वाकिरन्तः आनन्देन गीतवन्तः, नृत्यं कृतवन्तः च। एवं तच्च समग्रं दिनं महता सन्तोषेण यापितम् अभवत्।

सायं यदा जनानां सम्मर्दः न्यूनः जातः तदा राजा सेनाधिपतिम् आहूय उक्तवान्– ''परह्यः शृङ्गमयपर्वतात् आगतः उत्तुङ्गः नाम युवकः युवराज्ञ्यैः अपूर्वाणां पुष्पाणां गुच्छम् आनीय दत्तवान् खलु? तस्य पुष्पस्य सस्यानि अस्माकं उद्याने अपि भवेयुः इति प्रियंवदा इच्छति। अतः भवान् समर्थान् भटान् शृङ्गमयंपर्वतं प्रति प्रेषयित्वा तेषां सस्यानाम् आनयनस्य व्यवस्थां करोतु। पर्वतप्रदेशे उत्तुङ्गः साहाय्यं कुर्यात्। अतः भटाः तं पर्वतं गत्वा प्रथमम् उत्तुङ्गं पश्यन्तु'' इति।

''यथाज्ञापयति प्रभुः'' इति उक्त्वा सेनाधिपतिः गम्भीरसिंहः ततः निर्गतवान्। अनन्तरं दृढकायौ उभौ भटौ युवराज्ञ्याः अन्तःपुरम् आनीय तानि पुष्पाणि प्रदर्शितवान्। ताभ्यां किं करणीयम् इति विस्तरेण सूचितवान् च। गमनात् पूर्वं तौ भटौ युवराज्ञीम् उद्दिश्य– ''आर्ये, एतेषां पुष्पाणां सस्यम् अन्विष्य आनेष्यावः। अनुज्ञां ददातु कृपया'' इति उक्त्वा युवराज्ञीं नमस्कृत्य ततः निर्गतवन्तौ।

शृङ्गमयपर्वतं प्रति भटयोः गमनस्य अनन्तरं सप्ताहः अतीतः। तथापि भटौ न प्रत्यागतौ। 'भटौ इतोऽपि किमर्थं न प्रत्यागतौ?' इति चिन्ताक्रान्ता अभवत् युवराज्ञी। उत्तुङ्गेन आनीय दत्तानि पुष्पाणि दशानां दिनानाम् अनन्तरम् अपि अम्लानानि एव आसन्। एतत् दृष्टवत्याः युवराज्ञ्याः महान् सन्तोषः। सा प्रतिदिनं तानि पुष्पाणि प्रीत्या पश्यति।

एवम् एव त्रयः सप्ताहाः अतीताः। सस्यम् आनेतुं गतौ भटौ पुनः कानिचन पुष्पाणि स्वीकृत्य राजधानीं प्रत्यागतवन्तौ। सेनाधिपतिः गम्भीरसिंहः ताभ्यां सह राजभवनं गतवान्।

तौ भटौ दृष्ट्वा राजा युवराज्ञी च नितरां सन्तुष्टौ। भटाभ्याम् आनीतानि पुष्पाणि

युवराज्ञ्यै दत्त्वा उक्तवान् सेनाधिपतिः– ''शृङ्गमये पर्वते पुष्पमात्राणि लब्धानि, न तु सस्यानि'' इति।

राजा प्रश्नार्थकदृष्ट्या भटौ दृष्टवान्। तदा राज्ञः आशयं जानन्तौ भटौ उक्तवन्तौ– ''प्रभो, आवां बहूनि कष्टानि अनुभवन्तौ शृङ्गमयपर्वतं गतवन्तौ। उत्तुङ्गं दृष्ट्वा तस्य साहाय्येन पर्वतशिखरसमीपं गतवन्तौ। तत्र वेत्रगुल्मरूपेण प्रवृद्धाः अत्युन्नताः केचन वृक्षाः दृष्टाः आवाभ्याम्। ते च वृक्षाः आकाशं चुम्बन्तः इव आसन्। तेषाम् अग्रभागे एतानि पुष्पाणि शोभन्ते स्म। एतानि पुष्पाणि विद्युत् इव प्रकाशन्ते इत्यतः एतानि 'विद्युत्पुष्पाणि' इति पर्वतजनैः उच्यन्ते। शते वर्षेषु सकृत् पुष्प्यन्ते इत्यतः 'शताब्दपुष्पाणि' इत्यपि एतेषां नाम। पर्वतजनाः अपि एतानि पुष्पाणि ऐदम्प्राथम्येन पश्यन्तः सन्ति। सकृत् वृक्षाः पुष्प्यन्ते चेत् ततः वर्षद्वयस्य अनन्तरम् एतज्जातीयानि सस्यानि उत्पद्यन्ते। पुनः शतस्य वर्षाणाम् अनन्तरम् एव तानि वृक्षत्वं प्राप्य पुष्प्यन्ति। एषः विषयः तत्रत्यानां वृद्धानां मुखतः ज्ञातः आवाभ्याम्। सस्यानि तु न लभ्यन्ते एव। तथापि युवराज्ञ्याः पूर्णनिराशा न भवेत् इति उद्देशेन वृक्षान् आरुह्य एतानि पुष्पाणि आनीतानि आवाभ्याम्'' इति।

भटयोः वचनानि श्रुत्वा राजा नितराम् आश्चर्यचकितः। सः उक्तवान्–



''आश्चर्यजनकः विषयः एषः। वर्षद्वयस्य अनन्तरं यदा सस्यानि उत्पत्स्यन्ते तदा तानि आनीय उद्याने आरोपणीयानि अस्माभिः। एतद्विषये न अन्यः मार्गः'' इति।

''यदि तानि सस्यानि शतस्य वर्षाणाम् अनन्तरं पुष्पितानि भवेयुः तर्हि तेषां पुष्पाणां दर्शनस्य सौभाग्यं न भवति खलु मम'' इति विषादेन उक्तवती युवराज्ञी।

राजा तौ भटौ उद्दिश्य उक्तवान्– ''भवन्तौ महत् कष्टम् अनुभवन्तौ बहून् विषयान् सङ्गृह्य आगतवन्तौ। सस्यानाम् आनयनं न शक्तं चेदपि पुष्पाणि आनीतवन्तौ। प्रामाणिकः अभिनन्दनीयः प्रयत्नः भवतोः। भवन्तौ अहम् अभिनन्दामि'' इति।

ततः सेनाधिपतिम् उद्दिश्य उक्तवान् सः– "सेनापतिवर्य! यथोचितं सत्करणीयौ एतौ" इति।

"यथाज्ञापयति प्रभुः" इति उक्त्वा ताभ्यां भटाभ्यां सह ततः निर्गतवान् सेनाधिपतिः।

सैनिकाभ्याम् आनीताः वार्ताः राज्ये सर्वत्र प्रसृताः। राजगुरुः गौरीनाथः अपि एतां वार्तां कर्णाकर्णिकया श्रुतवान्। 'शताब्दिकापुष्पम्' इति शब्दस्य श्रवणात् एव सः रोमाञ्चितः जातः। सः बहूनि शास्त्राणि अधीतवान् आसीत्। विद्यानुगुणाः सद्गुणाः अपि आसन् तस्मिन्। सः राजपरिवारस्य हितेच्छुः अपि आसीत्।

सः ताडग्रन्थानां परिशीलनं कृत्वा तस्य विशिष्टपुष्पस्य विषये अधिकं विवरणं प्राप्तुं प्रयत्नं कृतवान्। ततः राजानं प्रति वार्तां प्रेषितवान् यत् मया त्वरया भवता सह वार्तालापः करणीयः अस्ति इति।

एतां वार्तां श्रुतवतः राज्ञः महत् आश्चर्यम्– राजगुरुः कं विशेषं वक्तुं राजभवनं स्वयम् आगच्छन् अस्ति इति। राजगुरुः यदा राजभवनम् आगतवान् तदा राजा तम् आदरेण स्वागतीकृत्य उचिते आसने उपवेशितवान्।

"भवतः आगमनस्य कारणं ज्ञातुम् उत्सुकम् अस्ति मम मनः" इति मन्दहासपूर्वकं विनयेन उक्तवान् सः।

तदा राजगुरुः उक्तवान्– "एकां विशिष्टां वार्तां निवेदयितुम् एव अहम् अत्र आगतः" इति।

राजा महता आश्चर्येण राजगुरुं दृष्टवान्। तदा राजगुरुः पुनः उक्तवान्– "महाराज! शताब्दिकापुष्पस्य विषये श्रुतं मया। एतस्य पुष्पस्य उद्भवः राज्यस्य राजपरिवारस्य च अशुभं सूचयति" इति।

"अशुभम्! किं वदति श्रीमन्! किम् अपूर्वस्य पुष्पस्य प्राप्तिः अशुभसूचिनी? कथम् एतत्?" इति आश्चर्येण भीत्या च पृष्टवान् राजा। स्वकर्णयोः विषये एव अविश्वासः आसीत् राज्ञः। –(अनुवर्तते)






# महाराज्ञीपदयोग्यता

यथा वेतालः दृढसङ्कल्पः अस्ति तथैव अहम् अपि दृढसङ्कल्पः एव इत्येतत् वचनं प्रमाणीकर्तुम् इच्छन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! केचन महता श्रमेण कार्यं कुर्वन्तः अपि कार्यफलप्राप्तितः वञ्चिताः भवन्ति। ते आत्मानं विवेकिनं भावयन्तः अविवेकपूर्णं निर्णयं कुर्वन्ति। अतः एव निरीक्षितं फलं प्राप्तुं न शक्नुवन्ति। अत्र उदाहरणरूपेण विशालवर्मणा स्वपुत्रस्य विवाहस्य विषये यत् कृतं तत् विस्तरेण श्रावयामि। एतां कथां श्रद्धया शृणोतु तावत्, येन भवतः मार्गायासः अपि परिहृतः भवेत्'' इति

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



प्राचीने काले विशालवर्मा नाम राजा वैशालिनीनामकं राज्यं पालयति स्म। तस्य एका भगिनी आसीत्। विवाहानन्तरं सा पुत्रीं प्रसूय प्राणान् त्यक्तवती आसीत्। भगिन्यां महती प्रीतिः आसीत् विशालवर्मणः। अतः सः भगिनीपुत्रीं विशालाक्षीं महत्या प्रीत्या पश्यति स्म। राज्ञः विशालवर्मणः विचारः आसीत् यत् यदा पुत्रः विजयवर्मा भागिनेयी विशालाक्षी च प्राप्तवयस्कौ भवतः तदा तयोः विवाहः निर्वर्तनीयः इति।

वर्षाणि अतीतानि। विजयवर्मा विशालाक्षी च प्राप्तवयस्कौ जातौ। तयोः व्यवहारं सुसूक्ष्मं परिशीलयन् आसीत् राजा विशालवर्मा। विजयवर्मा विशालाक्ष्यां विशेषासक्तिम् अनुरागं वा न प्रदर्शयति इत्यंशः तेन लक्षितः। 'यदि विजयवर्मा विशालाक्षीं परिणेतुं सिद्धः न भवेत् तर्हि मम इच्छा अपूर्णा एव तिष्ठेत् खलु?' इति राज्ञः आतङ्कः। 'इतः परम् अपि अहं यदि मदीयम् अभिलाषं पुत्रं न वदेयं तर्हि परिस्थितिः विषमा भवेत्' इति आलोच्य राजा कदाचित् पुत्रस्य पुरतः स्वस्य अपेक्षां निवेद्य प्रार्थितवान् यत् भवता विशालाक्षी परिणेतव्या इति।

विजयवर्मा क्षणकालं मौनं स्थितवान् आसीत्। अनन्तरं सः पितरम् उक्तवान्– "विशालाक्षीं यदि अहं परिणयेयं तर्हि सा मम अनुकूला सहधर्मिणी भवेत् नाम। किन्तु भाविनः महाराजस्य अनुरूपा महाराज्ञी तु सा भवितुं न अर्हति इति मम आशयः" इति।

पुत्रस्य वचनं श्रुतवतः राज्ञः विशालवर्मणः मनः मुकुलितं जातम्। तथापि सः आत्मानं निगृह्य उक्तवान्– "वत्स! भवतः वचनस्य तात्पर्यं सम्यक् न अवगतं मया। या भवतः अनुकूला भवेत् सा महाराज्ञीपदार्थम् अनर्हा कथं वा भवेत्? अस्तु तावत्, विशालाक्ष्याम् अविद्यमाना महाराज्ञीपदार्हता अन्यस्यां कस्याम् अस्ति?" इति।

विजयवर्मा क्षणकालं सङ्कोचम् अनुभूतवान्। अन्ते सः पितरम् उक्तवान्– "मया सह एव विद्याभ्यासं कृतवती महासेनाधिपतेः पुत्री सुमित्रा एतया दृष्ट्या अर्हा इति मम आशयः" इति।

पुत्रस्य वचनस्य श्रवणेन विशालवर्मा कुपितः। सः कोपेन एव पुत्रं पृष्टवान्– "विशालाक्ष्याः अपेक्षया सा सुमित्रा केन गुणेन श्रेष्ठा भवेत्? किं सौन्दर्येण, उत सुशीलतया? तादृशी विशिष्टा योग्यता का दृष्टा भवता?" इति।

तदा विजयवर्मा शान्तस्वरेण एव उक्तवान्– "मां क्षाम्यतु तात! भवान् इदानीं कोपयुक्तः अस्ति। अतः मम वचनम् अवश्यं भवतः अप्रियं भवति" इति।

एतत् श्रुत्वा राजा असन्तोषेण ततः उत्थाय गतवान्। एतदनन्तरं राजा द्वित्रवारं एतद्विषयकं प्रस्तावं कृतवान्। किन्तु विजयवर्मणः निर्णयः यथापूर्वम् अचलः एव आसीत्। अन्ते राजा महता खेदेन पुत्रम् उक्तवान्– "वत्स! मम अपेक्षा भवतः आशयः च परस्परं विरुद्धौ स्तः। भवतः विवाहः एवं समस्यां जनयेत् इति कदापि न निरीक्षितम् आसीत् मया" इति।

तदा विजयवर्मा पितरम् उक्तवान्– "तात! एतस्याः समस्यायाः परिहारार्थं मया कश्चन मार्गः चिन्तितः अस्ति। अहम् एकां कथां भवन्तं श्रावयामि। कथायाः अन्ते एकं प्रश्नम् अपि पृच्छामि। तस्य उत्तरं भवता वक्तव्यं नास्ति, अपि तु विशालाक्षीं सुमित्रां च एकत्र उपवेश्य ते एतां कथां श्रावयित्वा तयोः मुखतः एतस्य उत्तरं प्राप्तव्यम्। तयोः उत्तरम् एव, मम विवाहविषये उत्पन्नां



समस्यां परिहरिष्यति" इति।

अनन्योपायः विशालवर्मा पुत्रस्य मुखात् कथां श्रुतवान्। अनन्तरदिने विशालाक्षी सुमित्रा च अन्तःपुरे उपविश्य यदा वीणावादने मग्ने आस्तां तदा राजा तत्र गत्वा उपविश्य सामान्यवार्तालापं कृतवान्। वार्तालापस्य अन्ते सः ते उक्तवान्– "अहं भवत्यौ एकां समीचीनां कथां श्रावयामि। भवतीभ्यां श्रद्धया श्रोतव्यम्" इति।

अनन्तरं राजा कथाम् उक्तवान्–

"प्राचीने काले अवन्तीदेशं सिंहकेतुः नाम राजा पालयति स्म। तस्य द्वे पत्न्यौ आस्ताम्। वंशपरम्परायाः अनुगुणं ज्येष्ठैः निश्चिता स्वर्णलता ज्येष्ठपत्नी आसीत्। कनिष्ठा पत्नी



श्रीलेखा आसीत्, यस्याः च गुणान् दृष्ट्वा आकृष्टः राजा स्वयं तां परिणीतवान् आसीत्।

ज्येष्ठपत्नी स्वर्णलता भावयति स्म यत् राजा कनिष्ठपत्न्यां श्रीलेखायाम् एव अधिकम् अनुरागं प्रदर्शयति इति। अतः सा दुःखम् अपि अनुभवति स्म। श्रीलेखा राजकार्यादिषु अपि पत्या सह भागं वहति स्म। तावदेव न, पुरुषवेषं धृत्वा पत्या सह मृगयायाम् अपि भागं वहति स्म सा।

एतत्सर्वं दृष्ट्वा स्वर्णलता निश्चितवती यत् अहम् अपि पुरुषवेषं धृत्वा पत्या सह अटामि इति। अतः सा कदाचित् पतिं स्वविचारं निवेदितवती।

पत्न्याः आशयं ज्ञात्वा राजा सिंहकेतुः आश्चर्यचकितः। यावत् सः किमपि वक्तुम् उद्युक्तः तावता स्वर्णलता एव पुनः उक्तवती– "प्रभो, श्रीलेखा इव अहम् अपि अश्वारोहणं जानामि। खड्गचालने अपि निपुणता अस्ति मम" इति।

एतत् श्रुत्वा राजा सिंहकेतुः मन्दहासपूर्वकम् उक्तवान्– "देवि, अस्तु तावत्। भवत्याः इच्छा यथा अस्ति तथा भवतु" इति।

एतस्याः घटनायाः सप्ताहस्य अनन्तरं पुरुषवेषधारिणी स्वर्णलता पत्या सह मृगयार्थम् अरण्यं गतवती। अरण्ये अटविकानां कुटीराः तत्र तत्र दृश्यन्ते स्म। मृगयया श्रान्तः राजा पत्न्या सह समीपस्थम् एकं कुटीरं प्रविष्टवान्। तत्र एका भिल्लस्त्री आसीत्। सा राजानं राज्ञीं च आदरेण स्वागतीकृतवती। अनन्तरं मृत्पात्रेण नूतनं खाद्यपदार्थं ताभ्यां यच्छन्ती उक्तवती सा– "भिल्लगृहेषु एतत् विशेषतः सज्जीक्रियते। कृपया स्वीकरणीयम्" इति। एवं कथयन्त्याः तस्याः स्वरे सन्तोषभावः स्फुटं दृश्यते स्म।

सिंहकेतुः मन्दहासपूर्वकं तत् मृत्पात्रं स्वीकृतवान्। तं पदार्थं खादितुम् उद्युक्तः अभवत् च। स्वर्णलता अपि स्वीकर्यं पात्रं स्वीकृतवती। पात्रस्थं पदार्थं किञ्चित् स्वीकृत्य मुखे स्थापितवती च। किन्तु स च खाद्यपदार्थः तस्यै किञ्चिदपि न अरोचत। 'यदि एतत् खादेयं तर्हि वमनं भवेत्' इति

आलोच्य राज्ञी खाद्यपदार्थं पार्श्वे स्थापितवती। राजा तु पात्रस्थं समग्रं खादितवान्।

सर्वं खादित्वा राजा तां भिल्लमहिलाम् उक्तवान्– "एतत् तु बहु रुचिकरम् अस्ति। यदि अरण्यलभ्यं मधु अपि भवत्या दीयेत तर्हि महान् सन्तोषः भवेत्" इति।

एतत् श्रुत्वा भिल्लमहिला नितरां सन्तुष्टा। सा पत्रपुटेन मधु आनीय दत्तवती। उभौ अपि मधु पीतवन्तौ। किञ्चित्कालं यावत् विश्रान्तिसुखम् अनुभूय ततः निर्गतवन्तौ च। तयोः सम्प्रेषणार्थं भिल्लमहिला कुटीरात् बहिः आगतवती।

तदा स्वर्णलता– "प्रभो, क्षणाभ्यन्तरे एषाऽहम् आगच्छामि" इति महाराजम् उक्त्वा भिल्लमहिलां कुटीरस्य अन्तः नीतवती। भिल्लमहिलां पृष्ट्वा सा ज्ञातवती यत् खादितुं दत्तः स च पदार्थः कथं निर्मातव्यः इति।

ततः सप्ताहस्य अनन्तरं राजा सिंहकेतुः यदा स्वर्णलतायाः अन्तःपुरं गतवान् तदा स्वर्णलता सुवर्णपात्रेण खाद्यविशेषम् आनीय दत्तवती, उक्तवती चापि– "तस्मिन् दिने भवता भिल्लकुटीरे यः पदार्थः सन्तोषेण खादितः तम् अहम् अद्य सज्जीकृतवती अस्मि" इति।

तदा राजा सिंहकेतुः तत् सुवर्णपात्रं समीपस्थायाः उत्पीठिकायाः उपरि स्थापितवान्। स्वकण्ठे स्थितं मौक्तिकहारं स्वर्णलतायाः कण्ठे स्थापयन् उक्तवान् च–





''मद्विषये भवती या श्रद्धां प्रीतिं च प्रदर्शितवती तया अहं नितरां सन्तुष्टः अस्मि। देवि! कुसुमकोमला भवती अन्तःपुरे एव तिष्ठति चेत् वरम्। मया सह अटन्ती भवती यदि कष्टम् अनुभवेत् तर्हि अहं खिन्नः स्याम्'' इति।

पत्युः वचनं श्रुत्वा सन्तोषः अनुभोक्तव्यः, उत दुःखम् इति अजानती स्वर्णलता मौनम् आश्रितवती।''

एवं कथां समाप्य राजा विशालवर्मा विशालाक्षीं सुमित्रां च पश्यन् पृष्टवान्– ''मम कश्चन प्रश्नः अस्ति– स्वर्णलतायाः श्रीलेखायाः च विषये सिंहकेतुना यः व्यवहारः प्रदर्शितः सः पक्षपातपूर्णः आसीत् उत न इति। भवतीभ्याम् उत्तरं वक्तव्यम्'' इति।

तदा विशालाक्षी झटिति उत्तरम् उक्तवती– ''सिंहकेतुः स्वर्णलतायाः विषये असमीचीनतया व्यवहृतवान् इत्यत्र सन्देहः एव नास्ति। तस्य उभे अपि पत्न्यौ अश्वारोहणं खड्गचालनं च जानीतः स्म। एवम् उभयोः सामर्थ्ये समाने सत्यपि, राजा केवलं श्रीलेखाम् आत्मना सह मृगयादिनिमित्तं नयति स्म। स्वर्णलतां च अन्तःपुरे एव तिष्ठतु इति वदति स्म च। एषः व्यवहारः पक्षपातपूर्णः एव इत्यत्र नास्ति सन्देहः'' इति।

तदा सुमित्रा मन्दहासपूर्वकम् उक्तवती– ''सिंहकेतोः व्यवहारः योग्यः एव अस्ति। तदीयं शासनकौशलम् उचितानुचित-निर्णयसामर्थ्यं च श्लाघनीयम् एव'' इति।

एतत् उत्तरं श्रुत्वा राजा विशालवर्मा क्षणकालं चिन्तयन् स्थितवान्। अनन्तरं ततः उत्थाय मौनं निर्गतवान्।

एतदनन्तरं मासाभ्यन्तरे सुमित्रा-विजयवर्मणोः विवाहः महता वैभवेन प्रवृत्तः। राजा विशालवर्मा पुत्रस्य पट्टाभिषेकम् अपि कृत्वा राज्यपालनभारं पुत्राय अर्पितवान्।

वेतालः एवं कथां समाप्य अवदत्– ''राजन्! राजा विशालवर्मा विशालाक्ष्याः उत्तरं श्रुत्वा असन्तुष्टः। सुमित्रायाः उत्तरं श्रुत्वा च सन्तुष्टः। सुमित्रायाः उत्तरे तादृशं वैशिष्ट्यं किम् आसीत्? उभे अपि पत्न्यौ

समाने चेदपि सिंहकेतुः किमर्थं श्रीलेखायाम् अधिकप्रीतिमान् आसीत्? सिंहकेतोः व्यवहारः अनुचितः न आसीत् वा? एतत् जानन् अपि विशालवर्मा किमर्थं सुमित्रायाः उत्तरेण सन्तुष्टः? किमर्थं सा सुमित्राम् एव स्नुषात्वेन अङ्गीकृतवान्? पुत्रः विशालाक्ष्याम् आनासक्तः इति जानन् राजा विशालवर्मा सुमित्रायाः उत्तरस्य श्रवणेन सन्तोषम् अभिनयन् तां स्नुषात्वेन अङ्गीकृतवान्। एवं तस्य व्यवहारे वञ्चना स्फुटा खलु? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''सामान्यजनस्य महाराजस्य च व्यवहारे सर्वथा भेदः सहजः। सर्वाः प्रजाः राज्ञः परिवारसदस्याः भवन्ति। भिल्लमहिलायाः सन्तोषार्थं यः खाद्यपदार्थः खादितः सः राज्ञः प्रियः न आसीत्। एतत् अवगन्तुं न शक्तवती स्वर्णलता। यदि एतस्मिन् सन्दर्भे श्रीलेखा स्यात् तर्हि प्रजाप्रीत्यर्थं राज्ञा कृतस्य कार्यस्य प्रशंसाम् अकरिष्यत्। तत् खाद्यं राज्ञः प्रियम् इति मत्वा स्वर्णलता अन्तःपुरे तत् सज्जीकृत्य राज्ञे दातुम् उद्युक्ता यत् तदेव तस्याः मुग्धतां प्रदर्शयति। एतादृशी स्त्री यदि अन्तःपुरे एव तिष्ठेत् तर्हि वरम्। सर्वेषु व्यवहारेषु युक्तायुक्ततां परिशील्य श्रीलेखा राज्ञः साहाय्यं करोति स्म। एतादृशी स्त्री यदि राज्ञा सह सदा तिष्ठेत् तर्हि देशस्य हितम् एव। सुमित्रा श्रीलेखायाः व्यवहारं समर्थितवती। विशालाक्षी च स्वर्णलतायाः व्यवहारं समर्थितवती। एतेन राजा विशालवर्मा तयोः स्वभावं सामर्थ्यं च ज्ञातवान्। अतः पुत्रस्य विचारं पुरस्कुर्वन् सुमित्रां स्नुषां कृतवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# र स वा र्ता:



एषु दिनेषु त्रयाणां बालकानां नामानि विशेषतः श्रूयन्ते। एतेषु ज्येष्ठः अमेरिकावासी भारतीयमूलश्च अस्ति।

## आशाज्योतिः

गते जनवरीमासे २० तमे दिनाङ्के अमेरिकाध्यक्षः बिल् क्लिण्टन् अधिकारपदम् आरूढवान्। एतदर्थम् आयोजनस्य समारम्भस्य निमित्त ५० प्रमुखाः विशेषतः आमन्त्रिताः आसन्। तेषु नवदश(१९)वर्षीयः राजकुट्टन् अपि अन्यतमः, यं च दृष्ट्वा क्लिण्टन् उक्तवान् यत् एषः 'आशाज्योतिः' इति। भारतस्य केरलराज्यात् निर्गत्य अमेरिकादेशे वसतः डा. अप्पु कुट्टन्वर्यस्य पुत्रः एषः। आमन्त्रणं यदा प्राप्तं तदा राजकुट्टन् उक्तवान् – "आमन्त्रणं प्राप्य माता, पिता, भगिनी इत्यादयः वयं सर्वे नितरां सन्तुष्टाः। माता तावत् सन्तुष्टा यत् सन्तोषातिरेकेण सा किमपि वक्तुम् एव न शक्तवती" इति। समारम्भे भागं गृहीत्वा प्रत्यागतः सः उक्तवान् – "ऐतिहासिकस्य एतादृशस्य समारम्भस्य दर्शनं, समारम्भे भागग्रहणं च हर्षदायकम्" इति।

राजकुट्टन् यदा ३ वर्षीयः आसीत् तदा एव कारयानानां सङ्ख्यां दृष्ट्वा यथास्थितं स्मरति स्म। कदापि न विस्मरति स्म एव सः। पिता तं हार्किन्स्विश्वविद्यालयं नीत्वा परीक्षां कारितवान्। प्रवेशपरीक्षायाम् एतेन ९.०८ अङ्काः प्राप्ताः। नवमे वयसि एव एषः गणितशास्त्रपदवीधरः जातः। ततः एषः वालमार्गवासिनां केषाञ्चित् कोट्यधीशानां 'मनी मेनेजर' जातः। एषः इदानीं बिल् क्लिण्टन् वर्यस्य आर्थिकमार्गदर्शकेषु अन्यतमः अस्ति।

## अमेरिकासर्वकाराय अनुदानम्

अमेरिकादेशस्य उत्तर-डकोटा फार्गोवासिन्याः 'लारी बिल्लोला' नामिकायाः बालिकायाः वयः १४ वर्षाणि। सा सस्यवाणिज्येन यत् धनं सम्पादितवती आसीत् ततः १००० डालर् अनुदानरूपेण सर्वकाराय प्रेषितवती। बिल् क्लिण्टन्वर्यः अधिकारपदारोहणस्य समनन्तरम् एव शासनभारस्य निर्वहणार्थं जनान् प्रार्थितवान् यत् यथाशक्ति अनुदानं दातव्यम् इति। प्रतिक्रियारूपेण एषा धनं प्रेषयित्वा सूचितवती यत् एतत् धनं जनानां शिक्षणार्थम्, एड्स्रोगनिमित्तकस्य संशोधनार्थं च व्ययीकरणीयम् इति।



## अत्यल्पवयस्कः प्रकाशकः

अमेरिकादेशस्य दूरदर्शनस्य 'लेट् नैट्' कार्यक्रमाणां निर्वाहकः डेविड् लेटर्मन्, ग्लेन् एल्लिन् प्रदेशीयस्य ब्लाक् स्लार्कीनामकस्य दशवर्षीयस्य बालकस्य सन्दर्शनं कृतवान्। एषः बालकः चतुर्थकक्षायां पठति। चतुर्भ्यः वर्षेभ्यः 'औट् आफ् दि वर्ल्ड्' नामिकां पत्रिकां चालयन् अस्ति। समग्रे प्रपञ्चे एतस्याः पत्रिकायाः ग्राहकाः सन्ति। एषः सन्दर्शकः डेविड् अपि तस्याः पत्रिकायाः ग्राहकः एव।

# चन्दमामानुबन्धः—५४

**अस्मद्देशीया पशुपक्षिसम्पत्–**

## तरक्षवः चित्रकाः च

**व्या**घ्रः यथा तथैव तरक्षुः चित्रकः चापि मार्जारकुलीयौ एव। तरक्षु-चित्रकयोः अत्यल्पः भेदः भवति। तरक्षु(लियोपार्ड्)शरीरे गोलकालकाः बहवः भवन्ति। चित्रक(पैन्थर्)शरीरे च स्थूलाकारकाः कालकाः, मुखे कण्ठे च असमानपट्टिकाः, पुच्छे वलयाकारकपट्टिकाः च भवन्ति। एतौ उभौ अपि व्याघ्रापेक्षया आकारेण लघू। (२००-११५ सें.मी.) उभयोः अपि वर्णः प्रायः पीतः। कृष्णवर्णीयाः तरक्षवः चित्रकाः चापि भवन्ति, किन्तु ते विरलतया एव दृश्यन्ते। भारते व्याघ्रसन्ततिः नश्यमाना अस्ति, किन्तु तरक्षु-चित्रकयोः सङ्ख्यायां विशेषह्रासः न दृश्यते। भारते सर्वत्र एते द्रष्टुं शक्याः। कदाचित् जनवसतिम् अपि प्रविशन्ति एते।

हिमालयप्रदेशे निवसत्सु तरक्षुषु द्वैविध्यम् अस्ति। पूर्वहिमालये धूम्रवर्णीयाः, हिममये अन्यप्रदेशे श्वेतवर्णीयाः च दृश्यन्ते। श्वेततरक्षुः नयनमनोहरः भवति। एतेषां शरीरे तत्र तत्र कृष्णकालकाः दृश्यन्ते। एतस्य चर्म आकर्षकं भवति इत्यतः चर्मनिमित्तम् एतेषां मारणं प्रचलति। हिमालयप्रदेशीयाः तरक्षवः इतरतरक्षूणाम् अपेक्षया लघवः (प्रायः १००-११० सें.मी. दीर्घाः)।

व्याघ्राः प्रायः वृक्षारोहणसमर्थाः न भवन्ति। किन्तु तरक्षवः चित्रकाः च वृक्षारोहणनिपुणाः भवन्ति।





# आधुनिकं भारतीयसाहित्यम्

रात्रौ अन्धकारः प्रसृतः अस्ति। कश्चन पथिकः एकाकितया मन्दं गच्छन् आसीत्। अकस्मात् केचन लुण्ठाकाः तस्य अभिमुखम् आगच्छन्ति। तेषां वार्तालापतः सः ज्ञातवान् यत् एते अनतिदूरे स्थितं ग्रामं लुण्ठयितुं गच्छन्तः सन्ति इति।

"अये, तिष्ठतु तावत्। अन्यथा गोलिकास्त्रेण मारयिष्यामि भवन्तम्" इति उक्तवान् लुण्ठाकनायकः। सः एतं पृष्टवान्– "कः भवान्?" इति।

## जावर्चन्दवर्यस्य कृतिः – 'मृद्दीपः'

"अहं कश्चन स्वातन्त्र्ययोद्धा अस्मि। अस्माकं देशं वशीकृत्य स्वेच्छया राज्यशासनं कुर्वतः विदेशीयान् अत्याचारिणः विरुध्य युद्धं कुर्वन् अस्मि" इति उक्तवान् सः पथिकः।

"वयम् अपि भवादृशाः एव। धनिकानां दुष्टानां गृहेषु बद्धां लक्ष्मीं बन्धविमुक्तां कुर्मः। लोककण्टकानि निवारयामः च" इति उक्तवान् लुण्ठाकनायकः।

"किं भवन्तः केवलं धनिकान् पीडयन्ति? निरपराधिनः सामान्यान् न पीडयन्ति?" इति पृष्टवान् पथिकः।

"न। निरपराधिनः कदापि न पीडयामः" इति उक्तवान् लुण्ठाकनायकः।

"सामान्यान् निरपराधिनः जनान् वयं न पीडयामः इति खलु वदन्ति भवन्तः? किन्तु एतत् सत्यं वा? आत्मानं स्वयं पृच्छन्तु भवन्तः। यदा भवन्तः ग्रामं प्रति आगच्छन्तः सन्ति इति वार्ता श्रूयते तदा जनाः भीत्या कम्पन्ते। तेषु केचन गृहात् पलायनं कुर्वन्ति अपि। तेषां जीवने भवतां कारणतः भीतिः अशान्तिः च प्रसरति। भवतां ग्रहणार्थम् आगताः आरक्षकाः विचारणाव्याजेन ग्रामीणान् पीडयन्ति। भवतां कारणतः एव एतत् प्रचलति इत्यतः भवतां नाम्नः श्रवणात् एव जनाः भीताः भवन्ति। एवं जनानां पीडायाः कारणं भवन्ति भवन्तः। किम् एतत्सर्वं चिन्तितं भवद्भिः?" इति लुण्ठाकनायकं पृष्टवान् पथिकः।

तत्र इतोऽपि किञ्चित्कालं तयोः चर्चा प्रवृत्ता। अन्ते चोरनायकः स्वस्य वादं समर्थयितुम्

अशक्नुवन् पराजयम् अङ्गीकृतवान्। स्वस्य कृत्यार्थं पश्चात्तापम् अपि अनुभूतवान् सः। लुण्ठाकेषु हृदयपरिवर्तनं जातम्। पथिकः तु ततः निर्गतः। लुण्ठाकाः लुण्ठनविचारं परित्यज्य पर्वतम् उद्दिश्य प्रतिगताः। एवं स च ग्रामः लुण्ठनात् रक्षितम् अभवत्।

एवं लुण्ठाकानां मनःपरिवर्तनं कृतवान् महात्मा कश्चन समाजसेवकः आसीत्। तस्य नाम रविशङ्करमहाराजः इति। गुजरातप्रदेशीयः सः।

एतस्य शतकस्य पूर्वार्धे रविशङ्करमहाराजस्य विषये जनाः बहुधा वदन्ति स्म। सः कष्टपीडितान् रक्षति इति, अपूर्वाः शक्तीः सः वशीकृतवान् अस्ति इति, न केवलं दुर्मार्गानुयायिनः



क्रूरजनान्, अपि तु दुष्टजन्तून् अपि सज्जनान् करोति इति च जनाः भावयन्ति स्म। रविशङ्करमहाराजः लुण्ठाकादिभिः सह प्रीत्या व्यवहरति स्म। सः तेषां समस्याम् अवगत्य तस्याः निवारणार्थं प्रयत्नं कृत्वा तान् सन्मार्गे आनयति स्म।

शताधिकवर्षाणि यावत् जीवित्वा सद्यः परलोकं गतवतः रविशङ्करमहाराजस्य जीवनचरित्रं गुजरातभाषया 'मनसै-न-दिव'(मृद्दीपः) इति नाम्ना प्रकाशितम् अस्ति। रसप्रधानः कथाग्रन्थः इव एषा कृतिः रचिता अस्ति सुप्रसिद्धेन गुजरातलेखकेन जावरचन्दमेघानिवर्येण। एतेन इतोऽपि बहवः कथाग्रन्थाः, नाटकानि, लघुकथाः, कविताः च रचिताः सन्ति।

# भवन्तः जानन्ति वा?

१. 'ताजमहल्'नामकात् भवनात् अनतिदूरे प्रवहन्ती नदी का?
२. भारतस्य तच्च राज्यं किं, यच्च लोकसभां प्रति अत्यधिकान् सदस्यान् प्रेषयति?
३. कः पक्षी प्रेम्णः शान्तेः च चिह्नम् इति भाव्यते?
४. प्रपञ्चे जीवत्सु पशुषु महाकायः कः?
५. भारतस्य कस्मिन् राज्ये 'कूचिपुडि'नृत्यम् आधिक्येन प्रचलति?
६. 'विश्वस्य प्रकाशः' इति कस्य विषये प्रचारः क्रियते?
७. काराकोरं-राजमार्गः कौ देशौ योजयति?
८. भारतस्य पुराणेषु अग्नेः अधिदेवता का इति उच्यते?
९. चीनदेशस्य राजधानी बीजिंग्। तस्मिन् देशे अतिमहत् नगरं किम्?
१०. आधुनिकभवनेषु उपयुज्यमानायाः उन्नयिन्याः(लिफ्ट्) सृष्टिः केन कृता?
११. कस्मिन् देशे अधिकप्रमाणेन रजतं प्राप्यते?
१२. नोबेल्शान्तिपुरस्कारं प्राप्तवान् अमेरिकादेशीयः निग्रोनायकः कः?
१३. 'ईफिल् टावर्' कुत्र अस्ति?
१४. तुर्कदेशीया इस्ताम्बुल् पूर्वं केन नाम्ना निर्दिश्यते स्म?
१५. भारताय स्वातन्त्र्यं दातव्यम् इति यदा ब्रिटन्देशेन अङ्गीकृतम् तदा तत्र प्रधानमन्त्री कः आसीत्।
१६. 'रेखागणितस्य पिता' इति कः उच्यते?
१७. दक्षिण-अमेरिकादेशे चिली इत्यत्र भाष्यमाणा भाषा का?
१८. कस्य देशस्य ध्वजः केवलश्वेतवर्णमयः अस्ति?
१९. आधुनिकवित्तकोष(ब्याङ्किङ्ग्)व्यवस्था कुत्र आरब्धा?
२०. इदानीं द्वाराणि तालेन कील्यन्ते, तालश्च कुञ्चिकया कील्यते, उद्घाट्यते वा। एषा व्यवस्था ऐदम्प्राथम्येन कैः आरब्धा?

## उत्तराणि

१. यमुनानदी।
२. उत्तरप्रदेशराज्यम्।
३. पारावतः।
४. ब्लू व्हेल्।
५. आन्ध्रप्रदेशराज्ये।
६. येसुक्रिस्तविषये।
७. पाकिस्तान-चीनदेशौ।
८. अग्निदेवः एव।
९. शाङ्घाय्।
१०. एलिशा ओटिसवर्येण।
११. मेक्सिकोदेशे।
१२. मार्टिन् लूथर्किंग्वर्यः।
१३. फ्रान्स्राजधान्यां प्यारिस्नगरे।
१४. कान्स्टन्टिनोपल्नाम्ना।
१५. क्लेमेण्ट् अट्ली।
१६. यूक्लिड्वर्यः।
१७. स्पानिष्भाषा।
१८. पश्चिमसहारादेशस्य।
१९. इटलीदेशे।
२०. ईजिप्शियन्जनैः।




# अहङ्कारी सिद्धेशः

राजपुरग्रामे सिद्धेशः नाम कश्चन अहङ्कारी निवसति स्म। यदा सः कुपितः भवति तदा स्वकीयान् अन्यान् चापि कठोरं निन्दति स्म। ताडयितुं मारयितुं चापि उद्युक्तः भवति स्म। ग्रामीणाः सिद्धेशस्य एतं स्वभावं जानन्ति स्म इत्यतः ततः दूरे एव तिष्ठन्ति स्म।

कदाचित् चन्द्रनामकस्य कृषिकस्य महिषी सिद्धेशस्य क्षेत्रं प्रविश्य सस्यानि अखादत्। एतत् दृष्ट्वा क्रुद्धः सिद्धेशः दृढेन दण्डेन तां महिषीं सम्यक् ताडितवान्। अनन्तरं चन्द्रस्य गृहं गत्वा उच्चस्वरेण उक्तवान्– "अये चन्द्र! भवतः महिषी मम क्षेत्रं प्रविश्य सर्वाणि सस्यानि नाशितवती। अतः अहम् इदानीं मम धेनूः भवतः क्षेत्रं प्रवेश्य सर्वं नाशयिष्यामि" इति।

चन्द्रः सिद्धेशस्य कोपस्य स्वरूपं जानाति स्म। अतः सः शान्तस्वरेण उक्तवान्– "श्रीमन्! महिषी पशुः खलु? औचित्यप्रज्ञा तस्याः न भवति। अन्यच्च भवतः क्षेत्रे धान्यसस्यानि तु न आसन्। महिषी सामान्यानि तृणानि अचरत्। अतः एतत्सन्दर्भे औदार्यं प्रदर्शयन् क्षाम्यतु कृपया" इति।

एतावता अपि सिद्धेशः न शान्तः। सः पुनः उक्तवान्– "आं, महिषी पशुः बुद्धिहीना च। तथैव सा बुद्धिहीनस्य अपि। अये, सम्यक् शृणोतु। सप्ताहं यावत् तस्याः महिष्याः क्षीरं मम गृहं प्रति प्रेषणीयं भवता। अन्यथा मम धेनवः भवतः क्षेत्रं प्रविश्य सर्वं नाशयिष्यन्ति" इति।

सिद्धेशस्य विरोधम् अनिच्छन् चन्द्रः सप्ताहं यावत् क्षीरं सिद्धेशस्य गृहं प्रति प्रेषितवान्।



जातः स्यात्। तदर्थम् अहं क्षमां प्रार्थयामि। किन्तु यदि भवान् मां वञ्चकम् एव भावयति तर्हि इतः परं मम आपणतः किमपि मा क्रीणातु। एवं वृथा निन्दनं कोलाहलकरणं वा अनुचितम्" इति।

"अहो, मां नीतिम् उपदिशति वा भवान्? अस्तु, एतादृशे सन्दर्भे किं करणीयम् इति अहं जानामि" इति वदन् कोपेन एव ततः निर्गतवान् सिद्धेशः।

तस्यां रात्रौ आपणिकस्य वस्तुभाण्डागारं दग्धम् अभवत्। ग्रामीणाः सर्वे जानन्ति स्म यत् एतत् कार्यं सिद्धेशः एव कारितवान् इति। किन्तु सिद्धेशात् भीताः ते जानन्तः अपि मौनं स्थितवन्तः।

पुनः कदाचित् सिद्धेशः तद्ग्रामीणात् आपणात् गुडं क्रीतवान्। किन्तु अजागरूकतातः भारे किञ्चित् न्यूनता जाता। एतत् ज्ञात्वा सिद्धेशः क्रोधेन आपणिकसमीपं गतवान्। अवाच्यैः शब्दैः निन्दन् आपणिकम् उक्तवान् सः– "किं रे, मां वञ्चयति वा भवान्? मम सामर्थ्यं कीदृशम् इति एतत्परिसरे सर्वे जानन्ति। एतादृशं मां वञ्चयितुम् उद्युक्तस्य भवतः कियत् धाष्ट्र्यम्?" इति।

तदा आपणिकः उक्तवान्– "श्रीमन्, शान्तः भवतु। बुद्ध्या मया न्यूनं न दत्तम्। यदा भवान् गुडं क्रीतवान् तदा आपणे बहवः ग्राहकाः आसन्। अतः त्वरावशात् प्रमादः

तं ग्रामं कश्चन संन्यासी आगतवान्। सः सज्जनः महिमान्वितः च आसीत्। अतः ग्रामीणेषु एकैकः अपि तं संन्यासिनं स्वगृहम् आनीय भोजयितुम् उद्युक्तः अभवत्। एतत् दृष्ट्वा सिद्धेशः दर्पेण पत्नीम् उक्तवान्– "एतस्मिन् ग्रामे सामान्यः निर्धनः अपि संन्यासिनं गृहम् आहूय भोजयन् अस्ति। एवं स्थिते लोकप्रसिद्धः अहं मौनं तिष्ठेयं वा? अद्य मध्याह्ने तं संन्यासिनं गृहम् आनयामि। यथोचितं पाकं करोतु" इति।

अनन्तरं सिद्धेशः संन्यासिनः समीपं गत्वा दर्पेण एव उक्तवान्– "भोः, अहं कः इति भवान् जानाति इति भावयामि। अद्य मध्याह्ने भवता मम गृहे भोजनं करणीयम्"

इति।

तदा तत्र उपस्थितेषु कश्चित् धैर्येण अग्रे आगत्य सिद्धेशम् उक्तवान्– "श्रीमन्! आदरेण विनयेन च खलु भोजनार्थम् आह्वानम् उचितं स्यात्?" इति।

तदा संन्यासी उक्तवान्– "यः मां भोजनार्थम् आह्वयति तस्य गृहं प्रति गमनं मम धर्मः। अतः अहम् एतस्य गृहम् अवश्यं गच्छामि। आमन्त्रयितुः व्यवहारविषये अहम् अधिकं न चिन्तयामि" इति।

एतत् श्रुत्वा सिद्धेशः– "संन्यासिन्! योग्यम् उत्तरं दत्तं भवता। यत् अहं कर्तुम् इच्छामि तत् अवश्यं सिद्ध्येत् एव। अस्तु, साक्षात् द्वादशवादने भवान् मम गृहम् आगच्छतु" इति उक्त्वा ततः निर्गतवान्।

सिद्धेशेन सूचिते एव समये संन्यासी कुटीरात् प्रस्थितः। किन्तु तस्मिन् एव समये कैश्चित् सर्पेण दष्टः कश्चित् तत्र आनीतः। 'मन्त्रेण चिकित्सया वा विषं निवारयतु कृपया' इति प्रार्थितः च। अनन्योपायः संन्यासी विषापनयनार्थं चिकित्सां कृतवान्। अभिमन्त्रितं भस्म तस्य मुखे स्थापितवान् च। एतेन सः सर्पेण दष्टः जनः निद्रातः इव उत्थाय उपविष्टवान्।

एतस्याः घटनायाः कारणतः सिद्धेशस्य गृहस्य प्राप्तिसमये विलम्बः जातः। विलम्बेन आगतवन्तं संन्यासिनं कोपेन उक्तवान् सिद्धेशः– "किं रे एतत्? अहं यत्



इच्छामि तत् निश्चिते समये एव प्रचलेत्। विलम्बम् अहं न सहे। द्वादशवादने एव मया भोजनं कृतम्। इतः परं भवते भोजनं न दीयते। भवान् प्रतिगन्तुम् अर्हति" इति।

"अतिथिदेवो भव इति श्रुतिः कथयति। अतिथेः आगमनात् पूर्वम् एव गृहस्थः भोजनं न समापयेत्। तथा करणं पापाय। अस्तु तावत्, आगतम् अतिथिं भोजनदानं विना प्रतिप्रेषयति चेत् अपरं पापं सञ्चितं भवति" इति शान्तस्वरेण उक्तवान् संन्यासी।

तदा क्रुद्धः सिद्धेशः– "किं रे, माम् एव उपदिशति वा?" इति वदन् संन्यासिनं गलग्रहणपूर्वकं प्रेषयितुम् उद्युक्तः।

एतत् दृष्ट्वा जनाः नितरां क्रुद्धाः। ते

सिद्धेशं ताडयितुम् उद्युक्ताः अभवन्। तदा संन्यासी तान् निवारयन् उक्तवान्– "मानवस्य अहङ्कारः न भूषणम्। एतं त्यजन्तु भवन्तः। भगवान् एव एतं यथोचितं दण्डयिष्यति" इति।

जनाः तं त्यक्तवन्तः। संन्यासी प्रतिगतवान्। ततः मासाभ्यन्तरे सिद्धेशस्य हस्ते कश्चन महापिटकः उत्पन्नः। दिने दिने प्रवृद्धः च। ततः प्रतिदिनं पूयः धाराकारेण निर्गच्छति स्म। वैद्याः उक्तवन्तः– "महापिटकस्य निवारणार्थम् औषधं किमपि नास्ति। शस्त्रचिकित्सया हस्तः कर्तितः चेत् जीवरक्षणं भवेत्। अन्यथा प्राणापायः निश्चितः" इति।

इदानीं सिद्धेशे पश्चात्तापः उत्पन्नः। संन्यासी गलग्रहणपूर्वकं गृहात् निष्कासितः यत् तस्यैव फलम् एतत् इति ज्ञातवान् सः। हस्तकर्तनं सः सर्वथा न इच्छति स्म। 'विकलाङ्गस्य विषये जनाः अनादरं प्रकटयन्तः उपहसन्ति' इति भीतिः तस्य। सप्ताहाभ्यन्तरे एव तदीयः अहङ्कारः समूलं नष्टः। पश्चात्तापम् अनुभवन् सः गृहे एव स्थितवान्।

तेषु एव दिनेषु कदाचित् संन्यासी तस्य गृहम् आगत्य पृष्टवान्– "वत्स! कुशली खलु भवान्?" इति।

एतत् श्रुत्वा सिद्धेशः अश्रूणि स्रावयन् संन्यासिनः पादौ गृहीत्वा क्षमां प्रार्थितवान्।

तदा संन्यासी– "वत्स! पश्चात्तापः सर्वं पापं क्षालयति। अहङ्कारस्य दण्डः एतावता एव भवता प्राप्तः। अलं रोदनेन। उत्तिष्ठतु तावत्" इति उक्त्वा सिद्धेशम् उत्थाप्य महापिटकस्य उपरि अभिमन्त्रितं भस्म पातितवान्।

क्षणाभ्यन्तरे स च महापिटकः समूलम् अदृश्यतां गतः। सिद्धेशः च स्वस्थः अभवत्। ततः निर्गतः संन्यासी तं ग्रामं पुनः कदापि न आगतवान्। ततः आरभ्य सिद्धेशः सज्जनः जातः। परोपकारं कुर्वन् सः सुखेन जीवनं यापितवान्।






# निर्भीका बालिका

प्राचीने काले तुर्कदेशे अमीरखानः नाम कश्चन निर्धनः निवसति स्म। तस्य पत्नी दिवङ्गता आसीत्। एकमात्रपुत्री सलमा प्राप्तवयस्का जाता आसीत्। पुत्र्याः विवाहः कथं वा निर्वर्तनीयः इति बहुधा चिन्तयति स्म अमीरखानः।

सलमा बाल्यतः एव पिशाचादीनां कथां शृण्वती निर्भीका जाता आसीत्। सा भयं नाम्ना अपि न जानाति स्म।

कदाचित् अमीरखानस्य गृहे कश्चन विशेषभोजनकार्यक्रमः प्रवृत्तः। तत्र तदीयं बाल्यमित्रम् अहमदः अपि उपस्थितः आसीत्। भोजनकार्यक्रमः मध्यरात्रपर्यन्तं प्रवृत्तः। अन्ते अहमदः भोजनार्थम् उपविष्टवान्। किन्तु तदर्थं पर्याप्ताः रोटिकाः न आसन्। अतः अमीरखानः पुत्रीं सलमाम् आहूय उक्तवान्– "भवती हमीदस्य आपणतः चतस्रः रोटिकाः आनयतु" इति।

एतत् श्रुत्वा आश्चर्येण अहमदः पृष्टवान्– "हमीदस्य आपणः श्मशानस्य अपरपार्श्वे खलु अस्ति? मध्यरात्रसमये श्मशानमार्गेण गत्वा रोटिकाः आनेतुं शक्नुयात् वा सलमा?. सा भीता न भवेत् वा?" इति।

"भीतिः? मम पुत्रीं सलमां भाययितुं समर्थः पदार्थः अस्मिन् लोके कोऽपि नास्ति" इति उक्तवान् अमीरखानः।

मध्यरात्रे श्मशानमार्गेण एकाकितया गत्वा हमीदस्य आपणतः सलमा यदा रोटिकाः आनीतवती तदा अहमदः मित्रम् अमीरखानम् उक्तवान्– "मित्र! धैर्यवती खलु भवतः पुत्री? श्वः अमावास्या। श्वः रात्रौ श्मशानं गत्वा भवतः पुत्री ततः एकं कपालम् आनेतुं शक्नुयात् वा?" इति।

"तुर्कदेशीया जानपदकथा"



अमीरखानः हसन् उक्तवान्— "एकः कपालः आनेतव्यः इति? यदि भवतः अपेक्षा स्यात् तर्हि सा श्मशानस्थान् सर्वान् अपि कपालान् आनेतुं शक्नुयात्। यदि सा कपालम् आनयेत् तर्हि किं दद्यात् भवान्? शतस्य दीनाराणां पणः भवतु वा?" इति।.

एतं पणम् अहमदः अङ्गीकृतवान्। अनन्तरदिने प्रातः धनदानस्य आशां प्रदर्श्य अक्थरनामकं वृद्धं सूचितवान् यत् तस्यां रात्रौ श्मशाने निलीय किं किं करणीयम् इति। अनन्तरं सः मध्यरात्रसमये अमीरखानस्य गृहम् आगत्य सलमां सूचितवान् यत् इदानीम् एव भवत्या श्मशानतः एकः कपालः आनेतव्यः इति।

सलमा श्मशानं प्रति प्रस्थितवती। अहमदस्य सूचनायाः अनुगुणं वृद्धः अक्थरः तु पूर्वम् एव श्मशानं गत्वा निलीय स्थितः आसीत्। श्मशानम् आगता सलमा अन्धकारे एव हस्तं चालयन्ती एकं कपालं प्राप्तवती। तदा अक्थरः विचित्रस्वरेण उक्तवान्— "अये बालिके! तत् मा स्पृशतु। स च कपालः मम मातुलान्याः" इति।

सलमा तं कपालं परित्यज्य अपरं कपालं गृहीतवती। अक्थरः पुनरपि विचित्रस्वरेण उक्तवान्— "सः कपालः अपि न स्प्रष्टव्यः। यतः सः मम पितुः" इति।

एतत् श्रुत्वा सलमा कोपेन कपालं क्षिप्तवती। यतः स्वरः आगतः तस्यां दिशि विना शब्दं गतवती च। अनतिदूरे एव खल्वाटस्य कस्यचित् शिरः तया अस्पष्टतया दृष्टम्। इतस्ततः सञ्चारं दृष्ट्वा एव सलमा निश्चितवती यत् एतत् शिरः एव, न तु कपालः इति।

सलमा इतोऽपि अग्रे गतवती। "अये खल्वाट! दुष्टपिशाचमित्र! सम्यक् शृणोतु— पुनः किमपि वक्तुं मुखम् उद्घाटयति चेत् शिलया भवतः शिरः भञ्जयिष्यामि। ततः भवतः कपालम् एव गृहीत्वा गच्छामि। स्मरतु एतत्" इति उक्त्वा सा तं त्रिचतुरवारं सम्यक् ताडितवती अपि।

सलमायाः ताडनतः अक्थरः तत्रैव मूर्च्छां गतः। ततः सलमा एकं कपालं गृहीत्वा गृहं

प्रत्यागतवती। पराजयम् अङ्गीकृत्य अहमदः अमीरखानाय शतं दीनारान् दत्तवान्।

एतदनन्तरं न केवलं तस्मिन् ग्रामे, अपि तु समीपस्थेषु सर्वेषु ग्रामेषु तस्याः ख्यातिः प्रसृता– 'निर्भीका बालिका' इति। समीपस्थे कस्मिंश्चित् ग्रामे सुलेमानः नाम कश्चन धनिककुलोत्पन्नः युवकः निवसति स्म। सः सुन्दरः अपि आसीत्।

सुलेमानस्य गृहे तदीया मृता माता पिशाचीरूपं प्राप्य सञ्चरति स्म। अतः कोऽपि सेवकः सुलेमानस्य गृहे सप्ताहद्वयात् अधिकं कालं न तिष्ठति स्म। सुलेमानः सलमायाः निर्भीकतां श्रुत्वा 'अधिकं वेतनं दास्यामि' इति वचनं दत्त्वा तां स्वगृहे उद्योगित्वेन नियोजितवान्।

सलमा यदा सुलेमानस्य भोजनार्थं स्थालिकां स्थापयति तदा एव पिशाचीरूपिण्याः तदीयमातुः निमित्तम् अपि स्थालिकां स्थापित्वा भोजनपदार्थान् परिवेश्य प्रीत्या वदति स्म– "अम्ब! पुनः किञ्चित् खादतु। रुचिकरः पाकः सज्जीकृतः मया। खादतु तावत्" इति। एवं मधुरैः वचनैः सा अल्पेन एव कालेन पिशाचीं वशीकृतवती।

एकदा सुलेमानः कार्यार्थं नगरं गतः आसीत्। रात्रौ सलमा एकाकिनी यदा कार्यं कुर्वती आसीत् तदा तत्र पिशाची आगता।



तथापि सलमा किञ्चिदपि न भीता। तदा पिशाची एव पृष्टवती– "मम दर्शनात् भवत्याः भीतिः न भवति वा?" इति।

"भवत्याः सुशीलताम् अहं जानामि खलु? एवं स्थिते भवत्याः दर्शनतः भीतिः किमर्थं भवेत्?" इति प्रतिपृष्टवती सलमा।

तदा मन्दहासपूर्वकं पृष्टवती पिशाची– "भवत्याः निर्भीकतां सौन्दर्यं च दृष्ट्वा अहं नितरां सन्तुष्टा अस्मि। भवती यदि मम पुत्रं परिणीय एतस्य गृहस्य स्नुषा भवेत् तर्हि वरं स्यात्। किम् एतत् अनुमन्यते?" इति।

सलमा मन्दहासपूर्वकं मौनं स्थितवती। पिशाची क्षणकालं विचिन्त्य सलमां पृष्टवती– "एतस्मिन् गृहे कश्चन

अन्धकारमयः प्रकोष्ठः अस्ति। मया सह आगन्तुं शक्नुयात् वा भवती?" इति।

"अस्तु। मम तु न काऽपि भीतिः" इति वदन्ती सलमा पिशाचीम् अनुसृतवती। पिशाची ताम् एकं प्राचीनं प्रकोष्ठं नीतवती। तत्र कश्चन इष्टिकाराशिः आसीत्। 'एताः इष्टिकाः अपसारयतु' इति उक्तवती पिशाची। इष्टिकाः अपसारितवती सलमा। तदा तत्र गर्लान्तिकाद्वयं दृष्टम्। एका गर्लान्तिका बृहती, अपरा ततः किञ्चित् लघुः। उभयोः अपि अन्तः सुवर्णनाणकानि आसन्।

पिशाची सलमाम् उक्तवती– "पुत्रस्य हितार्थम् अहम् एतत् धनं रक्षन्ती अत्र आसम्। इदानीं भवत्यां मम विश्वासः अस्ति। अतः एतत् पात्रद्वयम् अपि भवदधीनं करोमि। बृहतीं गर्लान्तिकां मम पुत्राय ददातु। लघुगर्लान्तिका भवत्यै एव। अहम् आगच्छामि तावत्" इति। अनन्तरं सा ततः अदृश्या अभवत्।

अनन्तरदिने प्रातः सुलेमानः यदा नगरात् प्रत्यागतः तदा सलमा रात्रौ प्रवृत्तं समग्रं निवेद्य उक्तवती– "मातुः सूचनायाः अनुगुणं भवान् बृहतीं गर्लान्तिकां स्वीकरोतु। अहं लघुगर्लान्तिकां स्वीकरोमि" इति।

तदा सुलेमानः अनुरागपूर्णया दृष्ट्या सलमां दृष्ट्वा मन्दहासपूर्वकम् उक्तवान्– "अहं भवतीं परिणेतुम् इच्छामि, यदि भवत्याः अङ्गीकारः स्यात्। आवयोः विवाहः जातः चेत् सर्वाणि सुवर्णनाणकानि अस्मदीयानि एव भवन्ति खलु? किं वदति भवती एतद्विषये?" इति।

सलमा लज्जया शिरः अवनमय्य मन्दहासपूर्वकं कटाक्षेण सुलेमानं सकृत् दृष्ट्वा ततः स्वगृहं प्रति धावितवती। पितरं दृष्ट्वा प्रवृत्तं समग्रं निवेदितवती अपि। एतं विवाहप्रस्तावम् अमीरखानः महता सन्तोषेण अङ्गीकृतवान्।

ततः सप्ताहाभ्यन्तरे सुलमा-सुलेमानयोः विवाहः सवैभवं सम्पन्नः।





# वीरः हनूमान्

रामः रथे स्थित्वा यदा रावणम् उद्दिश्य बाणान् प्रयोक्तुम् उद्युक्तः तदा रावणस्य कोपः नितरां प्रवृद्धः। सः रामम् उद्दिश्य गन्धर्वास्त्रस्य प्रयोगं कृतवान्। रावणेन प्रयुक्तं तत् अस्त्रं झटिति अभिजानन् रामः प्रत्यस्त्रेण तत् निष्फलं कृतवान्। तदा रावणः दैवास्त्रस्य प्रयोगं कृतवान्। रामः तदपि अस्त्रं नाशितवान्।

अनन्तरं रावणः रामम् उद्दिश्य राक्षसास्त्रस्य प्रयोगं कृनवान्। तस्मात् अस्त्रात् निर्गताः अनेके घोराः विषसर्पाः मुखेन अग्निं वमन्तः रामसमीपम् आगतवन्तः। तदा रामः अविलम्बेन गरुडास्त्रस्य प्रयोगं कृतवान्। तस्मात् अस्त्रात् उद्भूतः गरुडः विषमयान् तान् सर्वान् सर्पान् क्षणमात्रेण निगीर्णवान्।

एतस्य सर्वस्य दर्शनतः रावणस्य कोपः पराकाष्ठां गतः। सः रामस्य उपरि विविधबाणानां वर्षणम् एव कृतवान्। शक्तिशालिना केनचित् बाणेन सः रामस्य रथस्य ध्वजस्तम्भम् अधः पातितवान्। पुनः कैश्चित् अस्त्रैः सः रथस्य अश्वान् व्रणितान् कृतवान्। आकाशे स्थित्वा राम-रावणयोः घोरं युद्धं देवाः, गन्धर्वाः, यक्षाः, किन्नराः, किम्पुरुषाः, चारणाः इत्यादयः पश्यन्तः आसन्। ते देवेन्द्रेण दत्तस्य रथस्य ध्वजस्तम्भस्य नाशं, बाणानां प्रहारतः व्रणितं रामं च दृष्ट्वा नितरां खिन्नाः जाताः।

युद्धे रावणस्य सामर्थ्यम् अधिकं दृश्यमानम् अस्ति इति ज्ञात्वा विभीषणः, सर्वे

**३५. रावणस्य मरणम्।**



वानराः च चिन्ताक्रान्ताः अभवन्।

रावणः चिन्तितवान् यत् रामस्य संहारार्थम् एषः एव सुसमयः इति। अतः सः वज्रायुधतुल्यं शूलं हस्तेन गृहीतवान्। तच्च अस्त्रं कृष्णधूममेघं जनयत् रक्तनीलज्वालायुक्तं सत् अपायकरं दृश्यते स्म।

रावणः तत् शूलम् उन्नीय रामम् उद्दिश्य उक्तवान्– "अये राम, एतत् शूलं भवतः अन्तं करिष्यति। क्षणाभ्यन्तरे एव न केवलं भवन्तं, भवदनुजं लक्ष्मणम् अपि एतत् संहरिष्यति। भवता मम अपमाननं कृतं यत्, मम पुत्राणां वधः कृतः यत्, राक्षसवीराणां संहारः कृतः यत् तस्य सर्वस्य प्रतीकारं करिष्यामि अहम्। इदानीं पश्यामि– भवन्तं कः रक्षिष्यति इति" इति। अनन्तरक्षणे एव तेन शूलास्त्रप्रयोगः कृतः अपि।

तच्च शूलास्त्रं सर्वत्र ज्वालाः प्रसारयत्, धूममेघं सृजत्, सर्वत्र अन्धकारं प्रसारयत् रामम् उद्दिश्य अगच्छत्। रामः तस्य निवारणार्थं यानि अस्त्राणि प्रयुक्तवान् तानि सर्वाणि दग्धानि जातानि। अस्त्रदाहात् उत्पन्नं भस्म दृष्ट्वा एव रामः ज्ञातवान् यत् रावणेन प्रयुक्तम् एतत् अस्त्रं कियत् घोरम् इति। इन्द्रेण रथेन सह प्रेषितं महाशक्तिशालि एकम् अस्त्रं झटिति प्रयुक्तवान् सः। तच्च अस्त्रं रावणस्य अस्त्रेण घट्टितम् अभवत्। रावणस्य अस्त्रं शक्तिहीनं जातं सत् अधः अपतत्।

एतेन रामस्य उत्साहः द्विगुणितं प्रवृद्धः। सः रावणम् उद्दिश्य विविधानि अस्त्राणि प्रयुक्तवान्। महाशक्तिशालि अस्त्रं व्यर्थं जातम् इति ज्ञातवतः रावणस्य मुखं तेजोरहितं जातम्। तस्य मनसि भीतिः उत्पन्ना। शरीरं कम्पमानं जातम्। रामेण प्रयुक्तेभ्यः बाणेभ्यः आत्मनः रक्षणं कर्तुम् अपि असमर्थः आसीत् सः। रावणस्य सारथिः एतं विषयं ज्ञातवान्। अतः सः रथं रणरङ्गात् दूरं नीतवान्। रावणं सैन्यमध्ये अपश्यन्तः राक्षसाः हाहाकारं कृतवन्तः।

यदा रथः युद्धभूमितः किञ्चिद्दूरं गतः तदा रावणेन वस्तुस्थितिः ज्ञाता। सः सारथिविषये कुपितः सन् सारथिं

गर्जितवान्– "अये दुष्ट! ऋते मम आज्ञायाः, किमर्थं भवान् रथं युद्धभूमितः दूरम् आनीतवान्? किं भवान् मां भीरुम् असमर्थं च मन्यते? किम् अहं शक्ति-युक्तिप्रयोगं न जानामि? किम् अहं महावीरः न? मम अपमानस्य कारणीभूतम् एतत् कार्यं किमर्थं कृतवान् भवान्? एतदर्थं भवान् शत्रुपक्षतः कीदृशं प्रतिफलं प्राप्तवान्? धिक् भवन्तम्। धिक् स्वपक्षघातकम्। त्वरया रथं रणरङ्गं नयतु रे। अलम् अविवेकेन" इति।

एतत् श्रुतवतः सारथेः मुखं कान्तिहीनं जातम्। सः रावणम् उक्तवान्– "प्रभो, अहं भवतः हितेच्छुः अस्मि। अतः एव रणरङ्गतः रथं दूरम् आनीतवान्। तीव्रयुद्धे रतस्य रामस्य सम्मुखीकरणे तात्कालिकम् भवतः असामर्थ्यं दृष्टं मया। भवान् श्रान्तः इव लक्षितः मया। तावदेव न, रथस्य अश्वाः अपि श्रान्ताः सन्ति। ते अवश्यं विश्रान्तिम् अपेक्षन्ते। अतः अहम् एतत् कार्यं कृतवान्। भवते अपि किञ्चित् विश्रान्तिः आवश्यकी इति चिन्तयामि अहम्। भवतः हितार्थम् एव एवं कृतं मया। अन्यः दुष्टविचारः कोऽपि नास्ति मम मनसि। युद्धभूमौ रथः कथं चालनीयः इत्यपि यदि अहं न जानीयां तर्हि अहं सारथिः कथं वा स्याम्? अस्तु तावत्, गतं तु गतम् एव। इदानीं किं करणीयम् इति आज्ञापयतु तावत्" इति।

सारथेः वचनं श्रुत्वा रावणः तदीयां



राजभक्तिं समयस्फूर्तिं च मत्वा एव श्लाघमानः हस्तात् अमूल्यं रत्नकङ्कणम् अपनीय तस्मै यच्छन् उक्तवान्– "भवतः राजभक्त्या तुष्टः अहम् एतत् ददामि। रामः एकेन एव बाणप्रहारेण संहरणीयः इति मम अपेक्षा। मम श्रान्त्यादिकम् अचिन्तयन् भवान् एकाग्रचित्ततया रथम् अग्रे चालयतु। रामसमीपं रथं नयतु प्रथमम्" इति।

तदा रावणस्य सारथिः रथं चोदयन् रामस्य पुरतः रावणं नीतवान्।

एतस्मिन् समये रामः अपि नितरां श्रान्तः आसीत्। रावणस्य सम्मुखीकरणार्थं तदीयं मनः इदानीं सिद्धं न आसीत्। राम-रावणयोः युद्धं द्रष्टुम् आगतेषु अगस्त्यः अपि अन्यतमः आसीत्। त्रिकालज्ञः सः रामम् उक्तवान्–



"वत्स, राम! भवतः श्रान्तिः अपनयनार्थं नवोत्साहस्य प्राप्त्यर्थं च अहं भवन्तम् आदित्यस्तोत्रम् उपदिशामि। सर्वस्तोत्रेषु एतत् स्तोत्रम् उत्कृष्टम् अस्ति। एतस्य पठनतः भवान् अमितम् उत्साहं प्राप्स्यति। रावणं लीलया सम्मुखीकर्तुं शक्ष्यति च" इति। एतावत् उक्त्वा सः रामम् 'आदित्यहृदयं' नाम स्तोत्रम् उपदिश्य ततः निर्गतवान्।

रामः तत् स्तोत्रं भक्त्या त्रिवारं जपितवान्। तेन तदीयः उत्साहः शक्तिः च द्विगुणितं प्रवृद्धे। सः धनुर्बाणादिकं गृहीत्वा महता उत्साहेन रावणस्य सम्मुखीकरणार्थम् इन्द्रेण दत्तस्य रथस्य समीपं गतवान्।

सारथिं मातलिम् उक्तवान् रामः– "रावणस्य संहारः करणीयः एव इति निश्चित्य इदानीं युद्धार्थं प्रस्थितवान् अस्मि। देवेन्द्रस्य सारथिः भवान् रथचालने सुनिपुणः। अतः रथचालनविषये मया सूचनीयं किमपि नास्ति। तथापि युद्धरतस्य मम कर्तव्यं स्मरन् वदामि– विना लोपं रथं चालयतु इति" इति।

"एतद्विषये निश्चिन्तः भवतु भवान्" इति मन्दहासपूर्वकम् उक्तवान् मातलिः।

यदा रामः रथे उपविष्टवान् तदा मातलिः अश्वान् चोदितवान्। अश्वाः वेगेन वायुम् अनुकृतवन्तः। रथः अग्रे गतः। रणरङ्गे धूलिमेघः उत्पन्नः। स च धूलिराशिः रावणरथम् आवृत्य अतिष्ठत्। एतत् मातलेः रथचालनकौशलतः सिद्धम् आसीत्।

एतत् दृष्ट्वा नितरां क्रुद्धः रावणः रामं लक्ष्यीकृत्य बाणवर्षणम् एव कृतवान्।

रामः इन्द्रेण दत्तं धनुः उन्नीय तस्मिन् बाणान् योजयित्वा युद्धं कृतवान्। रामस्य युद्धव्यवहारे महान् उत्साहः स्फुटं दृश्यते स्म।

अल्पेन एव कालेन राम-रावणयोः युद्धं घोरस्वरूपं प्राप्नोत्। उभयपक्षीयाः अपि परस्परयुद्धं विस्मृत्य एतयोः युद्धं महता आश्चर्येण पश्यन्तः स्थितवन्तः। तेषां मुखे भयं प्रसृतम् आसीत्। राम-रावणयोः युद्धस्य दर्शनात् भासते स्म यत् उभौ अपि एतत् युद्धं



निर्णायकं भावितवन्तौ स्तः इति।

एवं तयोः युद्धं किञ्चित्कालं प्रवृत्तम्। अत्रान्तरे रामस्य एकः तीक्ष्णः बाणः रावणस्य शिरः अकर्तयत्। किन्तु आश्चर्यं नाम क्षणाभ्यन्तरे एव रावणस्य शरीरे अपरं शिरः उत्पन्नं दृश्यते स्म।

रामः अपरेण बाणेन तत् अपि शिरः कर्तितवान्। यावत् कर्तितं शिरः भूमौ अपतत् तावता अन्यत् शिरः कण्ठभागस्य उपरि उत्पन्नम् आसीत्।

एवं रामः शतवारं रावणस्य शिरः कर्तितवान्। तावद्वारम् अपि तत्र नूतनं शिरः उत्पन्नम् आसीत्। एतत् दृष्टवतः रामस्य अत्याश्चर्यम्। पूर्वं दण्डकारण्ये विराधस्य, क्रौञ्चारण्ये कबन्धस्य च वधार्थं ये बाणाः उपयुक्ताः आसन् ते अपि इदानीं व्यर्थाः जाताः आसन्। एवं किमर्थं जातम् इति न ज्ञातवान् रामः।

रामः रावणः च सप्त दिनानि यावत् निद्रा-विश्रान्त्यादिकम् अपि परित्यज्य अहोरात्रं युद्धं कृतवन्तौ। रावणस्य अन्तिमकालः सन्निहितः न आसीत् इत्यतः रावणं लक्ष्यीकृत्य प्रयुक्ताः रामबाणाः व्यर्थाः भवन्ति स्म। एतं विषयम् इन्द्रसारथिः मातलिः जानाति स्म।

अष्टमे दिने यदा रावणस्य अन्तिमक्षणः सन्निहितः तदा मातलिः रामम् उक्तवान्– "राम! योग्यः क्षणः सन्निहितः अस्ति। अतः अविलम्बेन ब्रह्मास्त्रं प्रयुज्य दुष्टस्य रावणस्य वधं करोतु" इति।

मातलेः वचनस्य अनुगुणं सर्पाकारकं भयजनकम् अस्त्रं गृहीतवान् रामः। तदेव ब्रह्मास्त्रं नाम। तच्च अस्त्रं महाप्रकाशेन विराजते स्म। पूर्वं ब्रह्मा इन्द्रस्य निमित्तम् एतत् अस्त्रं सृष्टवान् आसीत्। वज्रायुधसदृशं महास्त्रम् अपि छेत्तुं समर्थम् आसीत् तत् अस्त्रम्।

सर्वशक्तियुक्तं तत् महास्त्रं मन्त्रेण अभिमन्त्र्य धनुषि योजितवान् रामः। रावणम् उद्दिश्य प्रयुक्तवान् च। तच्च अस्त्रं रावणस्य वक्षःस्थलं विभिद्य तदीयान् प्राणान् अहरत्।

रावणस्य शरीरं रथात् अधः अपतत्।

तस्य धनुर्बाणादयः हस्तात् च्युताः। एवं रावणस्य इहलोकव्यवहारः समाप्तः।

स्वनायकस्य मरणं दृष्ट्वा राक्षसाः हाहाकारं कृतवन्तः। रुदन्तः ते लङ्कानगरं प्रति धावितवन्तः। वानराः शत्रुनायकस्य मरणतः नितरां सन्तुष्टाः आसन्। प्राप्तं जयं स्मरन्तः ते नृत्यं कृतवन्तः। रामम् उन्नीय अटन्तः जयकारं कृतवन्तः।

रामस्य जयः यदा जातः तदा देवदुन्दुभयः ध्वनिं कृतवन्तः। पुष्पवृष्टिः जाता। आकाशे स्थिताः देवाः, गन्धर्वाः, यक्षाः, किन्नराः, किम्पुरुषाः, चारणाः च रामस्य प्रशंसां कृतवन्तः।




सुग्रीवः अङ्गदः च कृतकृत्यभावेन सन्तोषेण च युक्तौ आस्ताम्। सत्यस्य जयः जातः इत्यतः विभीषणः तृप्तः अस्ति। वानरप्रमुखाः सर्वे सन्तोषेण राम-लक्ष्मणयोः स्तुतिं कृतवन्तः।

अग्रजस्य मरणं स्मरतः विभीषणस्य खेदः अपि आसीत्। 'मम अग्रजः महापराक्रमी आसीत्। विद्वान् तपोधनः चापि आसीत्। किन्तु सीतापहरणं कुर्वन् अधर्ममार्गम् आश्रित्य एवं दुर्मरणं प्राप्तवान्' इति खेदं प्राप्तवान् विभीषणः।

एतत् जानन् रामः विभीषणस्य सान्त्वनं कृतवान्– "मित्र! विभीषण! रावणः वीरस्वर्गं प्राप्तवान्। वीरोचितं मरणम् एव प्राप्तं तेन। युद्धसमये एव मरणं वीरस्य भूषणम्। मरणं सर्वेषाम् अपि अस्ति एव। किन्तु केचन एव शूराः वीरोचितं मरणं प्राप्नुवन्ति। भवतः अग्रजः भाग्यशाली अस्ति। एषः अभिमानावहः विषयः। शोकं परित्यज्य उत्तरक्रियाविषये इदानीं चिन्तनीयं भवता" इति।

रामस्य सान्त्वनवचनैः विभीषणस्य खेदः किञ्चिदिव अपगतः। सः रामस्य अनुज्ञां प्राप्य अग्रजस्य उत्तरक्रियार्थं सन्नाहं कर्तुम् उद्युक्तः अभवत्।

रावणस्य मरणस्य वार्तां श्रुत्वा तस्य पत्न्यः अन्तःपुरात् निर्गत्य रणरङ्गम् आगतवत्यः। रावणस्य शवस्य उपरि पतित्वा रोदनं कृतवत्यः ताः।

पट्टमहिष्याः मन्दोदर्याः दुःखं तु वर्णनातीतम् आसीत्। "त्रिषु लोकेषु विजयं प्राप्य देवान् अपि दासान् कृतवतः भवतः एतादृशी गतिः कथं जाता? तत्रापि सामान्यः कश्चन मानवः भवन्तं मारयितुं शक्तवान् इति तु विश्वासानर्हम् इव भाति। प्राणनाथ! एतादृशः क्षणः मया द्रष्टव्यः भवेत् इति कदापि न चिन्तितम् आसीत्। अहो दुर्विधिः! अहो, दैवगतिः विचित्रा" इति वदन्ती मन्दोदरी उच्चैः आक्रन्दनं कृतवती।

तदा रामः विभीषणम् उक्तवान्– "विभीषण! कथमपि एतासां सान्त्वनं कृत्वा एताः अन्तःपुरं प्रेषयतु। अग्रजस्य अन्त्यसंस्कारः अविलम्बेन प्रचलतु" इति।

विभीषणस्य मनसि कश्चन धर्मसन्देहः उत्पन्नः आसीत्– 'मम अग्रजः रावणः महाज्ञानी, श्रुत्युक्तनित्यकर्मतत्परः च यद्यपि आसीत्, तथापि परवनिताम् अपहरता तेन परमनीचत्वं प्रदर्शितम्। एतादृशस्य अग्रजस्य अन्त्यसंस्कारः किं धर्मसम्मतः स्यात्? एतेन जनाः किं माम् 'अधर्ममार्गप्रोत्साहकः' इति न वदेयुः?' इति।

विभीषणमुखात् एतं सन्देहं ज्ञात्वा उक्तवान् रामः– "रावणेन एकः दोषः कृतः स्यात्। तथापि तस्मिन् सद्गुणाः बहवः आसन्। एतत् न विस्मर्तव्यं भवता। वस्तुतः रावणस्य जीवनं प्रशंसनीयम् एव। एतादृशस्य अग्रजस्य अन्त्यसंस्कारकरणं धर्मविरुद्धं कदापि न। निश्चिन्ततया अग्रे गच्छतु भवान्" इति।

शवदाहार्थं चन्दनकाष्ठैः चिता सज्जीकृता। तदुपरि वस्त्रं प्रसारितम्। ततः रावणस्य शवः तदुपरि शायितः। शास्त्रविध्यनुगुणं संस्कारान् कृत्वा चितायाम् अग्निं योजितवान् विभीषणः। अनन्तरं नद्यां स्नात्वा निवापाञ्जलिः अपि समर्पिता तेन। रावणस्य पत्न्यः लङ्कां प्रति प्रेषिताः। एवं सर्वाणि कार्याणि समाप्य विभीषणः रामस्य समीपं गतवान्।





# अपूर्वा मैत्री

अरविन्दपुरनामके ग्रामे अतुलः नाम कश्चन युवकः आसीत्। विंशतिवर्षीयः सः बहुविधविद्यां प्राप्तवान् आसीत्। कदाचित् तदीयः पिता तस्मै किञ्चित् धनं दत्त्वा उक्तवान्– "वत्स! एतत् धनं स्वीकृत्य भवान् नगरं गच्छतु। ततः प्रभूतं धनं सम्पाद्य आगच्छतु" इति।

अतुलः पितुः अनुज्ञां प्राप्य नगरं प्रति प्रस्थितवान्। अरण्यमार्गेण गच्छन् सः मध्येमार्गं विश्रान्त्यर्थम् उपविष्टवान्। अल्पे एव काले अन्यः कश्चन तरुणः तत्र आगतः। वार्तालापतः ज्ञातं यत् तस्य युवकस्य नाम अब्दुल्लः इति, सः अपि धनसम्पादनार्थं पित्रा प्रेषितः इति च।

समानवयस्कयोः समानस्वभावयोः च तयोः मैत्री अचिरात् एव सञ्जाता। तौ निश्चितवन्तौ यत् मिलित्वा एव उद्योगार्थं यत्नः करणीयः च इति।

तौ वार्तालापं कुर्वन्तौ अग्रे प्रस्थितवन्तौ। तावता केचन अटविकाः हठात् आगत्य तान् आक्रम्य स्थितवन्तः। अटविकनायकः तौ उक्तवान्– "देव्यै बलिरूपेण समर्पणार्थं वयं योग्यस्य जनस्य अन्वेषणं कुर्वन्तः आस्म। अस्माकं कृते एकः एव आवश्यकः, न तु द्वौ। अतः परस्परं समालोच्य भवन्तौ निर्णयं कुरुतां यत् केन अस्माभिः सह आगन्तव्यम् इति" इति।

अतुलः अब्दुल्लः वा स्वमित्रस्य बलिं न इच्छतः। केनापि उपायेन मित्रस्य रक्षणं करणीयम् इति तयोः इच्छा।

"यदि एतादृश्यां स्थितौ भवन्तं परित्यज्य अहं गच्छेयं तर्हि पापभाग् भवेयम्। अतः अहम् एतैः सह गच्छामि। भवान् इतः गच्छतु" इति अब्दुल्लम् उक्तवान् अतुलः।

"भामहः"



"भवन्तं यदि अहं कष्टे पातयेयं तर्हि भगवान् मां कथं वा क्षाम्येत्? अतः अहम् एव एतैः सह गमिष्यामि। भवान् नगरं गच्छतु" इति उक्तवान् अब्दुल्लः।

एवं तौ परस्परं चर्चां कृतवन्तौ। तदा विलम्बम् असहमानः अटविकनायकः उक्तवान्– "विलम्बः जातः। कियत्पर्यन्तं भवतोः वार्तालापः?" इति।

"अहं भवद्भिः सह आगमिष्यामि। एतं प्रतिगमनार्थं भवान् अङ्गीकारयतु कृपया" इति उक्तवान् अब्दुल्लः।

"तथा न भवति। अहम् एव भवद्भिः सह आगमिष्यामि। भवन्तः एतम् एव अङ्गीकारयन्तु" इति उक्तवान् अतुलः।

एतत् दृष्ट्वा अटविकनायकः आश्चर्यचकितः। "भवदृशाः जनाः विरलाः। अतः भवन्तौ उभौ अपि नयामः वयम्। सद्यः भवतोः अन्यतरं पूर्णिमादिने बलिरूपेण देव्यै समर्पयामः। षण्णां मासानाम् अनन्तरम् अपरं बलिरूपेण अर्पयिष्यामः। एतेन देवी नितरां सन्तुष्टा भवेत्" इति उक्त्वा अटविकनायकः तौ वसतिं नीतवान्।

अटविकवसतिं प्रति गमनस्य अनन्तरं चिन्तामिश्रितेन स्वरेण अतुलं पृष्टवान् अब्दुल्लः– "कस्यचित् मनुष्यस्य बलिरूपेण समर्पणेन किं देवी प्रसन्ना भवेत्?" इति।

"अज्ञानिनः तथा भावयन्ति" इति उक्तवान् अतुलः।

अनन्तरदिने यदा अटविकनायकः तयोः समीपम् आगतः तदा तौ उक्तवन्तौ– "इतः दशानां दिनानाम् अनन्तरं खलु पूर्णिमा? एतदभ्यन्तरे आवयोः सकाशात् बहु ज्ञानं प्राप्तुं शक्नुवन्ति भवन्तः। तेन भवतां लाभः भवेत्" इति।

एषः प्रस्तावः अटविकनायकाय अरोचत। अनन्तरम् अतुलः अब्दुल्लः च विविधान् पाकं पाठितवन्तौ। ताभ्यां सज्जीकृतं पाकपदार्थं खादित्वा सर्वे अटविकाः नितरां सन्तुष्टाः।

एवं पाकपाठनतः अटविकानां हृदयं जित्वा तौ तान् प्रतिदिनं नीतिकथां बोधितवन्तौ। तासां कथानां प्रभावतः अटविकेषु महत् परिवर्तनं जातम्। तावदेव न, अटविकयुवतिः



काचित् अतुले अनुरक्ता जाता, अपरा च अब्दुल्ले। ते युवती एकान्ते स्वप्रियकरम् उक्तवत्यौ– "यदि भवान् मां परिणेतुं सिद्धः भवति तर्हि इतः पलायनार्थम् अहं मार्गं सूचयिष्यामि" इति। किन्तु अतुलः अब्दुल्लः च पलायनं न इच्छतः स्म। अतः तौ प्रवृत्तं समग्रम् अटविकनायकम् उक्तवन्तौ।

तयोः प्रामाणिकतां निष्कपटतां च दृष्ट्वा अटविकनायकः तौ उक्तवान्– "उत्तमजीवनस्य मार्गाः अस्माभिः भवतोः सकाशात् ज्ञाताः। नरबलिः अनुचिता इति विषयम् अहम् अपि अङ्गीकरोमि इदानीम्। किन्तु जातिक्रमं परित्यज्य यदि अहं बलिदानं स्थगयेयं तर्हि देवी कुपिता भवेत् इति भीतिः मम" इति।

"नरबलिं काऽपि देवी वस्तुतः न इच्छति" इति उक्तवान् अब्दुल्लः।

"भवतां वचने कथम् अहं विश्वासं करोमि? देवी कुपिता न भवेत् इत्यत्र किं प्रमाणम्?" इति पृष्ट्वा अटविकनायकः ततः निर्गतवान्।

अतुलः अब्दुल्लः च परस्परं समालोच्य एकां योजनां कृतवन्तौ। अनन्तरदिने अटविकनायकम् उक्तवान् अतुलः– "पूर्णिमायां मां बलिरूपेण समर्पयतु। मम मित्रम् अब्दुल्लः अभिमन्त्रितम् एकं खड्गं भवते ददाति। यदि देवी बलिप्रिया स्यात् तर्हि तस्य खड्गस्य प्रहारेण अहं प्राणैः वियुक्तः भवेयम्। यदि देवी बलिप्रिया न स्यात् तर्हि स च खड्गः मां स्प्रष्टुं न शक्नोति" इति।

एतं प्रस्तावम् अटविकनायकः सन्तोषेण अङ्गीकृतवान्। "यदि वस्तुतः अपि खड्गः भवतः मारणं निराकुर्यात् तर्हि देवी बलिं न इच्छति इत्येतत् अहम् अङ्गीकरोमि" इति उक्तवान् सः।

अब्दुल्लः अटविकनायकद्वारा एकं खड्गम् आनायितवान्। आत्मनः समीपे स्थितस्य चुम्बकस्य घर्षणं कृत्वा तं खड्गम् अपि चुम्बकं कृतवान् सः। अनन्तरम् एकं लोहखण्डम् अपि एतेन एव क्रमेण चुम्बकं कृतवान्। ततः तं लोहखण्डम् अतुलस्य कण्ठे बद्ध्वा खड्गप्रहारप्रयोगः कृतः। यदा खड्गः



अतुलस्य कण्ठस्य समीपम् आगतः तदा विकर्षणं प्राप्य ततः दूरम् अगच्छत्। 'एतेन प्रयोगेण अटविकनायकः निश्चयेन प्रभावितः भविष्यति' इति निश्चितवन्तौ तौ।

पूर्णिमादिनम् आगतम्। बलिनिमित्तं सिद्धः जातः अतुलः। अनन्तरं ताभ्यां यथा चिन्तितं तथैव प्रवृत्तम्। यदा अटविकनायकः खड्गम् अतुलकण्ठस्य समीपं नयति तदा खड्गः विकर्षणकारणतः ततः दूरं गच्छति स्म। यदा द्वित्रवारं प्रयत्नः कृतः तदा अपि एवम् एव जातम्। एतत् दृष्ट्वा अटविकप्रमुखः खड्गं क्षिप्त्वा बलिवेदिकातः अतुलम् उत्थापितवान्। अनन्तरं तयोः पादौ गृहीत्वा उक्तवान्- "भवन्तौ वस्तुतः महापुरुषौ एव। अस्माकं देव्याः विषये वयं यावत् जानीमः ततोऽपि अधिकं भवन्तौ जानीतः। भवतोः सकाशात् अस्माभिः बहु ज्ञातम् अस्ति। वयं नरबलिसमर्पणं परित्यजामः। उत्तमं जीवनं यापयितुम् इच्छामः। किन्तु चौर्यवृत्तिं परित्यजामः चेत् अस्माकं जीवनार्थम् अन्यः मार्गः नास्ति। यतः अस्मत्समीपे धनं नास्ति। यदि भवन्तौ किञ्चित् उपकारं कुरुतः तर्हि वरं भवेत्। इतः समीपे पर्वते एका गुहा अस्ति। तत्र कश्चन राक्षसः अस्ति इति श्रूयते। एतदपि श्रूयते यत् तस्य समीपे बहु धनं सुवर्णं च अस्ति इति। भवन्तौ उपायचतुरौ। अतः कथमपि यदि भवन्तौ ततः धनम् आनीय दातुं शक्नुतः तर्हि वयम् उपकृताः स्याम" इति।

अतुलः अब्दुल्लः च तम् उत्थाप्य वचनं दत्तवन्तौ यत् धनम् अवश्यम् आनीय दीयते इति। अटविकनायकः तौ पर्वतगुहाप्रदेशं प्रापितवान्। गुहायां घोरः अन्धकारः आसीत्। उभौ अपि धैर्येण अन्तः गतवन्तौ। किञ्चिद्दूरं गमनानन्तरं तयोः पुरतः विद्युत्सदृशी काचित् कान्तिः प्रत्यक्षा जाता। अपरक्षणे तयोः पुरतः काचित् सुन्दरी स्थिता आसीत्।

सा सुन्दरी अतुलम् उक्तवती— "यः मां पश्यति सः यदि मां परिणयेत् तर्हि एव जीवेत्। भवान् सुन्दरः दृश्यते। आगच्छतु, मां परिणयतु तावत्" इति।

"तर्हि मम मित्रस्य का गतिः?" इति पृष्टवान् अतुलः।

एतत् श्रुत्वा सा सुन्दरी सकृत् हसितवती। अपरक्षणे एव अब्दुल्लः दग्धः सन् भस्मरूपतां प्राप्तवान्। मित्रस्य एतादृशीं दुर्गतिं दृष्ट्वा खेदम् अनुभवन् भस्मराशेः पार्श्वे उपविश्य रोदनं कुर्वन् तां सुन्दरीम् उक्तवान् अतुलः– "दुष्टे! निर्दया भवती। अहं भवतीं न परिणेष्यामि। माम् अपि भवती भस्मसात्करोतु" इति।

"भवति आशाम् उत्पाद्य भवन्तौ पृथक्करणीयौ इति मम विचारः आसीत्। किन्तु तत् न सिद्धम्। भवतोः मैत्री अपूर्वा अस्ति। अब्दुल्लः अचिरात् एव जीवितः भविष्यति। भवन्तौ अग्रे गच्छताम्। भवतोः शुभं भविष्यति" इति उक्त्वा सा सुन्दरी अदृश्यतां गता।

अल्पे एव काले अब्दुल्लः जीवं प्राप्य उत्थितवान्। अतुलस्य मुखात् प्रवृत्तं सर्वं ज्ञातवान् सः। अनन्तरम् उक्तवान् च– "यः प्रामाणिकः सन् भगवति विश्वासं करोति तस्य हानिः कदापि न भवति" इति।

अनन्तरं तौ अग्रे गतवन्तौ। अल्पे एव काले कश्चन कृशकायः तयोः पुरतः आगत्य स्थितवान्। सः हसन् तौ उक्तवान्– "भोः, अत्र आगच्छताम्। गायतां च। यस्य गानं मह्यं रोचते तस्मै अहं धनागारं प्रदर्शयिष्यामि। यस्य गानं मह्यं न रोचते तं



संहरिष्यामि च" इति।

उभौ अपि कण्ठं समीकृत्य सुमधुरं गीतवन्तौ। एतत् श्रुत्वा सः कृशकायः सन्तोषातिरेकेण नृत्यं कर्तुम् उद्युक्तः। यावत् गीतं समाप्तं तावता अतुलः अधः अपतत्, प्राणैः वियुक्तः अभवत् च। एतत् दृष्ट्वा अब्दुल्लः रोदनं कुर्वन् उक्तवान्– "यदि मम मित्रं न जीवेत् तर्हि मम जीवनेन वा किम्? भोः, कृपया वदतु– मित्रस्य उज्जीवनार्थं कः उपायः इति" इति।

सः कृशकायः उत्तरं किमपि न उक्तवान्। अब्दुल्लं ततः अग्रे नीतवान् सः। तत्र किञ्चन विशालं भवनं दृष्टम्। तस्मिन् भवने सर्वत्र सुवर्ण-रजतादीनाम् आभरणानां धनस्य च



राशिः एव दृश्यते स्म। अपारम् ऐश्वर्यं दृष्टवतः अब्दुल्लस्य नेत्रे आश्चर्येण विस्तृते!

"एतत् समग्रम् ऐश्वर्यं भवतः अस्ति। यदि इदानीम् अपि भवान् मित्रम् उज्जीवयितुम् इच्छति तर्हि मित्रम् उज्जीवितं भवेत्। किन्तु एतत् ऐश्वर्यं तदा अदृश्यतां गमिष्यति। अतः सम्यक् चिन्तयित्वा मां वदतु यत् मित्रम् अपेक्ष्यते उत संम्पत्तिः इति" इति उक्तवान् कृशकायः।

अब्दुल्लः अधिकं चिन्तनम् अकृत्वा दृढस्वरेण एव उक्तवान्– "मया मित्रम् एव अपेक्ष्यते" इति।

अनन्तरक्षणे एव तत् भवनम्, ऐश्वर्यं च अदृश्यम् अभवत्। सः कृशकायः पुरुषः चापि अदृश्यतां गतः। अब्दुल्लस्य पुरतः अतुलः प्रत्यक्षः जातः आसीत्।

यत् प्रवृत्तं तत् समग्रं श्रुत्वा अतुलः उक्तवान्– "यः भगवति विश्वासं करोति तस्य काऽपि हानिः न भवति इत्येतत् पुनरपि प्रमाणितम् अभवत्" इति।

उभौ अपि सन्तोषेण अग्रे गतवन्तौ। किञ्चित्कालानन्तरं पर्वताकारः विशालकायः कश्चन राक्षसः तयोः पुरतः आगत्य स्थितवान्। सः अतुलम् अब्दुल्लं च प्रीत्या पश्यन् उक्तवान्– "भवतोः मैत्री अपूर्वा एव। भवतोः एकः मोहं जितवान् चेत् अपरः धनलोभं जितवान्। बहुधा चिन्तनस्य अनन्तरम् अपि मया न ज्ञायते यत् भवतोः कः श्रेष्ठः इति। अतः भवन्तौ सम्यक् आलोच्य सप्रमाणं वदतां यत् भवतोः कः श्रेष्ठः इति" इति।

"कः भवान्? आवयोः मध्ये कतरः श्रेष्ठः इति ज्ञानतः भवतः कः लाभः?" इति धैर्येण पृष्टवान् अतुलः।

"पर्वतराक्षसः इति जनाः मां कथयन्ति। अत्रत्यायाः महत्याः सम्पत्तेः स्वामी अहम्। भवतोः यः श्रेष्ठः तस्मै अत्रत्यां सुन्दरीं कन्यां ददामि। अत्रत्यां सम्पत्तिं तयोः कृते यौतकरूपेण ददामि। अपरं जनं पक्त्वा खादित्वा पाताललोकं गमिष्यामि" इति उक्तवान् राक्षसः।

अतुलः अब्दुल्लः च ततः किञ्चित्

अपसृत्य परस्परं समालोचनं कृतवन्तौ। तौ निर्णीतवन्तौ– 'अद्यावधि सामोपायेन दानोपायेन वा कोऽपि आवां पृथक्कर्तुं न शक्तवान्। इदानीम् एषः राक्षसः भेदोपायेन आवयोः मैत्रीं नाशयितुम् इच्छति। आवाभ्यां जागरूकतया भवितव्यम्' इति।

अनन्तरं तौ राक्षससमीपं गत्वा उक्तवन्तौ– "अस्मिन् लोके न कोऽपि उच्चः, न कोऽपि नीचः वा। श्रेष्ठा व्यक्तिः च भगवान् एव। भवान् योग्याय सुन्दरीं दातुम् इच्छति खलु? तर्हि अटविकनायकाय तां ददातु। सः उत्तममार्गेण गन्तुम् इच्छति। सम्पत्तिं तस्मै ददातु। तदा सः तदनुयायिनः च सन्मार्गगामिनः भवन्ति। आवां तु नगरं गन्तुम् इच्छावः। अतः नगरं प्रति गमनार्थं मार्गं सूचयतु। तावता अलम्" इति।

क्षणाभ्यन्तरे तयोः पुरतः अन्धकारः प्रसृतः इव। किं प्रवर्तते इति न ज्ञातवन्तौ तौ। यदा नेत्रम् उद्घाटितं तदा तौ नगरमार्गस्य पार्श्वे आस्ताम्।

तौ चिन्तितवन्तौ यत् अटविकानां हितं सिद्धं स्यात् इति। 'काऽपि शक्तिः आवयोः मैत्रीं छेत्तुं यथा न शक्नुयात् तथा वरेण अनुगृह्णातु' इति भगवन्तं प्रार्थितवन्तौ तौ।

तौ किञ्चिद्दूरम् अग्रे गतवन्तौ। तत्र मार्गस्य एकस्मिन् पार्श्वे शिवमन्दिरम् अपरपार्श्वे च यवनमन्दिरं च आसीत्। मन्दिरदर्शनतः तौ 'प्रार्थना करणीया' इत्यंशं स्मृतवन्तौ। अतुलः शिवमन्दिरं प्रति प्रस्थितवान्, अब्दुल्लः च यवनमन्दिरं प्रति। किञ्चिद्दूरं गत्वा परिवृत्य पश्यन्तौ तौ चिन्तितवन्तौ– 'आवां परस्परात् दूरं गच्छन्तौ स्वः' इति।

तौ दृष्ट्वा तयोः चिन्तनं च ज्ञात्वा भगवान् चिन्तितवान्– 'भगवत्तत्त्वम् एकम् एव। उपासकानां मतिभेदस्य कारणतः विभिन्नाः देवाः लोके दृश्यन्ते इत्येतां वस्तुस्थितिं न जानीतः खलु एतौ। एवं स्वस्य अज्ञानस्य कारणतः परस्परमैत्रीं स्वयं विनाशयतः। अहो अविवेकिता!' इति।






# शापफलम्

कस्मिंश्चित् ग्रामे कश्चन कुसीदवणिक् आसीत्। सः परमदुष्टः आसीत्। जनानां पीडनेन सः सन्तोषम् अनुभवति स्म।

एषः कुसीदवणिक् कस्यैचित् निर्धनमहिलायै ऋणं दत्तवान् आसीत्। तस्याः महिलायाः षट् पुत्राः आसन्। पतिः तु आकस्मिकतया मरणं प्राप्तवान् आसीत्। अनन्यगतिका वृद्धा स्वस्य कष्टमयानि दिनानि स्मरन्ती अश्रूणि स्रावयन्ती एतस्मात् कुसीदवणिक्तः त्रिंशद्रूप्यकाणि ऋणरूपेण स्वीकृतवती आसीत्। एवं स्वीकरणसमये तया गृहस्य आधित्वम् अङ्गीकृतम् आसीत्। एकं वर्षम् अतीतं चेदपि तया तत् ऋणं प्रत्यर्पयितुं न शक्तम्। प्रत्युत सा पुनरपि पञ्चदश रूप्यकाणि ऋणरूपेण स्वीकृतवती। वृद्धिचक्रवृद्ध्यादिकं योजयित्वा इदानीं सः कुसीदवणिक् वदन् आसीत् यत् आहत्य शतं रूप्यकाणि दातव्यानि इति। यत् गृहं वृद्धा आधिं कृतवती तत् तु द्विशताधिकरूप्यकमूल्यं तु निश्चयेन अर्हति स्म। तादृशं गृहं तर्जन-भीतिजननादिना वशीकरणीयम् इति कुसीदवणिजः इच्छा।

एकदा प्रातःकाले सः कुसीदवणिक् निर्धनायाः महिलायाः गृहं स्वायत्तीकर्तुम् इच्छन् गृहात् निर्गतवान्। मार्गे गमनसमये अभिमुखम् आगच्छन् कश्चन पिशाचः तेन दृष्टः। सः पिशाचं पृष्टवान्– "भोः पिशाच! किमर्थम् एतं ग्रामं प्रति आगमनं भवतः? अस्माकं ग्रामे कस्यापि परलोकगमनं निश्चितं वा?" इति।

तदा पिशाचः हसन् उक्तवान्– "बहूनां दिनानाम् अनन्तरम् एतं ग्रामं प्रति मम आगमनम्। कुत्रापि आहारः लभ्येत वा इति द्रष्टुम् अत्र आगतः। तदस्तु, भवान् कुत्र गच्छन् अस्ति?" इति। तदा कुसीदवणिक् स्वस्य गमनोद्देशं निवेदितवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

"अहो, वर्षद्वयाभ्यन्तरे मूलधनस्य अपेक्षया अपि वृद्धिधनम् एव अधिकं जातम् अस्ति! भवन्तः मानवाः अस्मान् पिशाचान् वृथा निन्दन्ति। वस्तुतः तु पिशाचानाम् अपेक्षया अपि भवन्तः एव क्रूराः" इति उक्तवान् पिशाचः।

एतत् वचनं श्रुतवतः कुसीदवणिजः किञ्चिदपि कोपः न आगतः। प्रत्युतः एतत् वचनं मम प्रशंसापरम् इत्येव चिन्तयन् सः सन्तोषम् अनुभूतवान्।

ततः उभौ अपि वार्तालापं कुर्वन्तौ अग्रे गतवन्तौ। एवं गमनसमये कस्माच्चित् निर्धनगृहतः पुत्रं तर्जयन्त्याः क्रुद्धायाः महिलायाः स्वरः श्रुतः– "अये मूर्ख! यदि कश्चन पिशाचः भवन्तं खादेत् तर्हि वरम् अभविष्यत्। द्वारं पिधाय उपविशतु इति खलु मया उक्तम्? भवान् तु द्वारम् उद्घाट्य उपविष्टवान्। मार्जारः समग्रं क्षीरं पीत्वा गतवान्। इदानीं किं करणीयं मया?" इति।

एतानि वचनानि श्रुत्वा कुसीदवणिक् पिशाचम् उक्तवान्– "भोः, भोजनं प्राप्तम् अस्ति, पश्यतु। खादनार्थं भवते स्वपुत्रं यच्छन्ती अस्ति सा महिला। गच्छतु। आनन्देन तं बालं खादतु" इति।

तदा हसन् उक्तवान् पिशाचः– "क्रोधकारणतः सा तथा उक्तवती। किन्तु वस्तुतः तु सा पुत्रं मह्यं दातुं सर्वथा न इच्छति। एतत् अनुभवबलात् जानामि अहम्। एतावत् अपि ज्ञातुम् अशक्तं मूर्खं भावयति वा माम्?" इति।



ततः तौ पुनरपि अग्रे गतवन्तौ। तत्र पतिः पत्नी च परस्परकलहे निमग्नौ आस्ताम्। पतिः पत्नीम् अवदत्– 'यदि पिशाचः भवतीं खादेत् तर्हि अहं निश्चिन्तः भवेयम्' इति। पत्नी अपि पतिं तथैव उक्तवती। एतत् श्रुत्वा कुसीदवणिक् पिशाचम् उक्तवान्– "एषः तु पूर्वतनस्य अपेक्षया उत्तमः अवकाशः। उभौ अपि युगपत् खादितुम् अर्हति भवान्। कुतो वा विलम्बः?" इति।

"एतौ परस्परं निन्दतः। किन्तु अन्तरङ्गे प्रीतिः तु अस्ति एव। यत्र शापः तत्र एव मम अवकाशः। आस्तां तावत्, अग्रे गच्छाव तावत्" इति अवदत् पिशाचः।

तौ अग्रे गतवन्तौ। ऋणस्वीकर्त्र्याः वृद्धायाः गृहं प्राप्तम्। कुसीदवणिक् द्वारताडनशब्दं कृतवान्। द्वारम् उद्घाट्य बहिः आगता वृद्धा पृष्टवती– "कः विशेषः वत्स!"? इति।

कुसीदवणिक् निर्लज्जम् उक्तवान्– "अम्ब! ऋणं स्मारयितुम् अहम् आगतः। वर्षद्वयतः भवती ऋणं न प्रत्यर्पितवती। वृद्धिः तु प्रवर्धते एव खलु? आहत्य शतं रूप्यकाणि भवत्या दातव्यानि। असहाया भवती एतत् धनं कुतो वा दद्यात्? अतः आधिरूपेण निर्दिष्टम् एतत् गृहं महृयम् अर्पयित्वा ऋणात् मुक्ता भवतु" इति।

एतत् श्रुत्वा वृद्धा कोपेन कम्पमाना उच्चस्वरेण उक्तवती– "अये वञ्चक! मया पञ्चचत्वारिंशत् रूप्यकाणि प्राप्तानि। अधिकां वृद्धिं योजयित्वा 'शतं रूप्यकाणि दातव्यानि भवत्या' इति वदति वा? मम एकमात्राधारं गृहं स्वायत्तीकर्तुम् एषः उपायः भवतः। यदि कश्चन पिशाचः भवन्तं खादेत् तर्हि मादृशाः निर्धनाः सुखेन तिष्ठेयुः। धिक् पापात्मन्!" इति। एतावत् उक्त्वा सा सम्मार्जनीम् आनेतुम् अन्तः गतवती। तदा पिशाचः कुसीदवणिजं लीलया निगीर्णवान्। तावता बहिः आगता वृद्धा कुसीदवणिजं कुत्रापि अपश्यन्ती– "वराकः भीत्या पलायितवान् इति भाति" इति वदन्ती अन्तः गतवती।



# प्रकृतिवैचित्र्याणि–

## मकराः राक्षसगोधिकाकुलीयाः

पूर्वं भूमौ निवसन्तीनां राक्षसगोधिकानाम् इदानीन्तनानां मकराणां च विशेषसाम्यं दृश्यते। मकराः प्रायः महत्सु सरोवरेषु नदीषु तटाकेषु च निवसन्ति। एतेषु द्वैविध्यम् अस्ति– 'क्रोकोडिलिडी' 'गानियालिडी' चेति। उभयविधयोः आहारादिक्रमः यद्यपि समानः' तथापि तयोः मुखस्वरूपे भेदः दृश्यते। प्रथमविधस्य मुखं विशालं भवति। अधोभागस्य चतस्रः दंष्ट्राः स्फुटतया बहिः दृश्यन्ते च। द्वितीयविधस्य तु दीर्घा कृशाः नासिका भवति। दंष्ट्राः न महाकारिकाः बहिस्तात् अदृश्यमानाः च भवन्ति।



## व्याघ्रचर्या

यदा व्याघ्रः कोपयुक्तः भवति तदा तस्य कर्णौ उन्मुखौ भवतः। कर्णयोः उपरि गोलाकारिकाः पट्टिकाः भवन्ति। उत्कर्णः व्याघ्रः क्षणाभ्यन्तरे आक्रमणं करोति एव। अतः व्याघ्रः यदा उत्कर्णः न भवति तदा ऊहितुं शक्नुमः यत् एषः कुपितः न इति। कदाचित् व्याघ्रः पुरतः अन्यं दृष्ट्वा दन्तान् प्रदर्शयन् गर्जति। अनन्तरं ततः निर्गच्छति च। यथा 'भषन् शुनकः न दशति' इति श्रूयते तथैव गर्जन् व्याघ्रः अपि आक्रमणं न करोति इति वक्तुं शक्नुमः।



## अतिप्राचीनः आम्रवृक्षः

आम्रवृक्षस्य सामान्यम् आयुः ५० वर्षाणि। किन्तु १९१२ तमे वर्षे कोयम्बत्तूरुनगरे कृषिविश्वविद्यालयस्य निर्माणार्थं क्रीते स्थले ५० वर्षीयः आम्रवृक्षः कश्चन आसीत्। स च वृक्षः इदानीम् अपि जीवति, प्रतिवर्षं २००० फलानि फलति च। एतस्य वृक्षस्य आयुः इदानीं १४० वर्षाणि स्यात्। अस्माकं देशस्य प्राचीनवृक्षेषु अन्यतमस्य एतस्य मूलभागस्य वैशाल्यं १४ द्वादशाङ्गुलमितम्। ४० द्वादशाङ्गुलोन्नतस्य एतस्य वृक्षस्य शाखाः भारवशात् यथा न पतेयुः तथा व्यवस्था कृता अस्ति।

Vacation time is here again
Time to put text books away
So we've come together to say
Have fun and 'Happy Holidays'!



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां अगस्ट्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **महान् अपि गजः किञ्चिदपि आनन्दं न जनयति, अचेतनत्वात्।**

द्वितीयचित्रम् - **अल्पोऽपि मार्जारः महान्तम् आनन्दं जनयति, चेतनत्वात्।**

प्रेषकः - ब्र॥ अवधेशचैतन्यः, परमार्थसाधकसङ्घः, वाराणसी-१०




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

HEALTHY CHILD—NATION'S HOPE & PRIDE

Design courtesy : World Health Organisation